श्रीः

भारतेतिहास-संशोधक-मण्डलम्

# महाराष्ट्रीय-सारस्वतम्

ग्रन्थः प्रथमः

श्रीमन्मुकुन्दमुनिकृतम्

# महाभाष्यम्

पाठकोपाह्वत्र्यम्बकतनूजश्रीधरशर्मणा संस्कृतम्

१८३५ मितशाकसंवत्सरे फाल्गुनशुक्ले पौर्णमास्यां

मूल्यमर्धरूप्यकम्

इदं पुस्तकं धूलिनगरे श्रीयुतैर्देवोपाव्हैः श्रीकृष्णतनूजैः शंकरशर्मभिः
स्वीये 'श्री आत्माराम' मुद्रणालये संमुद्रितम्।
तच्च
श्रीयुतैर्मेहेन्दळे इत्युपाव्हैश्चिन्तामणितनूजैः खण्डेरावशर्मभिः पुण्यपत्तने
भा. इ. सं. मण्डलस्य कार्यालये प्रसिद्धिमनायि।

॥ श्री ॥

# प्रास्ताविकं किञ्चित्



निखिलाधिकारिजननिकायमलिनान्तःकरणशुद्धिद्वारा परमपुरुषार्थस्य निःश्रेयसाख्यस्याधिगतौ वेदान्तशास्त्रं तद्विचारस्तदुदितोपासनानुष्ठानं चेति त्रयं साधकतममिति सर्वविद्वज्जनैः सादरं संमन्यते । अस्मिंस्त्रये वेदान्तशास्त्रं मूलभूतं तत्र सन्ति बहवः शारीरसूत्रभाष्यादयो ग्रन्थास्तथापि तेषां स्वल्पविषयमतिदुरवगाह्यत्वमालोच्य परमकारुणिकेन श्रीमुकुन्दराजमुनिना ' महाभाष्यम् ' इत्याख्यः प्रबन्धो निरमायि सच मया यथामति संस्कृतिमनायि । अधुना प्रस्तुतग्रन्थविषये किंचिद्विचार्यते—ग्रन्थवरोऽयं सिद्धान्तभूतस्य मीमांसितमतस्य प्रतिपादकोऽपि सन्न केवलं पाण्डित्यद्योतिशब्दजालसंमिश्रः किन्तु मुमुक्षूणामुपकाराय सुगमसुललितपदबन्धविलसितः । अत्राहता गुरुशिष्यसंवादद्योतिका पद्धतिस्तेन प्राचीनग्रन्थेषु यथा ननुनचेत्यादिभिस्त्वाच्छिरस्कैर्वचःसमूहैरध्येतॄणां व्यामोहस्तथा नात्र । किं च पूर्वतनग्रन्थेषु वेदान्तपरिभाषावेदान्तसारादिषु केवलं सुगमतया प्रकृतशास्त्रप्रवेशार्थं निर्मितेष्वप्यध्येतॄणां न्यायपूर्वमीमांसादिदर्शनैः संस्कृतबुद्धित्वमपेक्ष्यते न तथात्र ग्रन्थे, यतोऽस्मिंस्तत्तत्स्थले सौलभ्येन विचारक्रमो वरीवर्ति । दृढं विश्वसिति मे मनो यत्केवलं गीर्वाणभाषाप्रविष्टानां पौराणिकानामपि बुद्धिपथमारोहेदयं निबन्धः । अयं ग्रन्थो निर्मातुर्भक्तवरिष्ठत्वमुपदेशपरम्पराप्रवणत्वं च द्योतयति । सर्ववेदान्तनिबन्धेषु सुगमत्वेनाखिलाद्वैततत्त्वप्रदर्शकोऽयं निबन्धः प्रथम एवेति कथनेऽपि नातिशयोक्तिः । अस्य महाभाष्यमिति संज्ञा व्यधायि नि-

मात्रा तदाशयस्त्वेवं प्रतीयते यथा व्याकरणमहाभाष्ये पातञ्जले सर्वे विषयाः सुगमतया प्रश्नोत्तररूपेण च प्रतिपादिता एवमत्रापि वेदान्तविषयाः ।

ग्रन्थकारश्च भगवद्भक्तवरिष्ठः श्रीमुकुन्दराजो न केवलं वेदान्तपारदृश्वा पण्डितोऽपि त्वेतद्ग्रन्थान्तनिविष्टमुनिपदार्हः । यतः पुराणमुनिवत्तेन दुरवबोधोऽपि वेदान्तविषयः सुलभभाषामयेन दृष्टान्तपरिप्लुतेन प्रबन्धेन जनतां प्रत्यबोधि । अयं महात्मा मुनिः कस्मिन्समये कतमं भूप्रदेशमलं चकारेति किंचिदुच्यते श्रीयुतेतिहाससंशोधकराजवाडेमहाशयाद्दृतसरण्या । तेन च महाभागेन महाराष्ट्रभाषयैवमुदलेखि । श्रीमुकुन्दराजस्य मुनेर्वैनगंगातीरे नागपुरेति प्रसिद्धमण्डले भण्डारापुरसविधे खेडलाग्रामे समाधिः । तेनायं स्वजन्मना निवासेन च बैतुलछिन्दवाडेति प्रदेशं भूषयामास किं चाद्यापि तच्छिष्यपरम्परा तस्मिन्विषये दरीदृश्यते । आदिनाथादारभ्यास्य श्रीज्ञानेश्वरस्य च परम्परा तेनास्य श्रीज्ञानेश्वरस्य चैककालभवत्वम् । ज्ञानेश्वरस्य कालः शाकसंवत्सरान्तर्गतद्वादशशतात्मकस्तेनास्यापि स एव तत्समीपस्थो वा । अनेन महाराष्ट्रभाषायां विवेकसिन्ध्वादयो बहवो निबन्धा निरमीयन्त । एतस्य ग्रन्थानालोच्यैवं मनसि भावना प्रादुर्भवति यन्महाराष्ट्रादिभाषाग्रन्थकाराः पूर्वे सर्वदेशस्थजनानुद्धर्तुं गीर्वाणभाषाद्वारा ग्रन्थान्निर्माय पश्चात्केवलं तत्तद्भाषाज्ञानुद्धर्तुं महाराष्ट्रादिभाषायां निबन्धान् रचयन्ति स्म । उक्तं च ' गीर्वाणभाषा वासोवत्सर्वदेशविभूषिका । देशभाषा तु भूषावदेकदेशविभूषिका ॥ १ ॥ श्रीभक्तवरिष्ठो दासोपन्त इमां भावनां पोषयति । यतो गीर्वाणभाषया दशानामुपनिषद्भाष्याणां रचयितायं महाराष्ट्रभाषायां ग्रन्थचयं व्यदधौ । सम्प्रति दासोपन्तस्य प्रत्येकं सपादलक्षग्रन्थात्मकं पदार्णवगीतार्णवेत्यभिधं निबन्धद्वयमुपलभ्यते ।

अस्य प्रकृतमहाभाष्यस्यान्यानि त्रीणि पुस्तकानि दक्षिणमहाविद्यालयादुपलब्धानि परं शुद्धपाठयुतत्वादेकमेव टिप्पणीरूपेण पाठप्रदर्शनायोपयोजितम् । यावच्छक्यं गीताश्रुतिवचनस्थलनिर्देशोऽकारि संपूर्णश्च द्वितीयस्मिन्संस्करणे स्यादित्याशास्ते । प्राचीनहस्तलिखितपुस्तकसंशोधने यथाशक्ति विरचितेष्वपि प्रयत्नेषु मानुषशेमुषीसुलभावकाशा दोषा नान्तर्दधीरंस्तान्क्षन्तुं प्रसीदन्तु विद्वांस इति सविनयं साञ्जलिबन्धं समभ्यर्थयते ।

विद्वदनुचरः

**पाठकोपनामा त्र्यम्बकतनूजनुः श्रीधरशर्मा.**



श्रीः

# मुकुंदमुनिकृतं

# महाभाष्यम्



**श्रीगणेशाय नमः । श्रीमत्परमहंसपरिव्राजकाचार्यचरणारविन्दाभ्यां नमः ।** अगुणाय गुणाढ्याय स्वस्थायान-न्दरूपिणे ॥ स्वप्रकाशाय शुद्धाय श्रीराममुनये नमः ॥ १ ॥ निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः ॥ कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपपद्यते ॥ २ ॥ ( अपारसंसारसमुद्रमग्नजीवालिसन्तारणकारणाय ॥ यः प्रादुरासीत्पुरुषोऽविनाशी तं रामचन्द्रं मुनिमानतोऽस्मि ॥ ३ ॥ रामचन्द्रपदाम्भोजमकरन्दालिवृत्तिना ॥ मुकुन्दमुनिनाद्वैतं ज्ञानं सर्वस्वमुच्यते ॥ ४ ॥ श्रीमन्मुनीन्द्रेण मुकुन्दनाम्ना विनिर्मितोऽनन्तमुनेः सुखाय ॥ विवेकसिन्धुर्यमनुप्रविश्य सद्यः पुमानेति हरिस्वरूपम् ॥ ५ ॥ विवेकसिन्धुं मुनिवर्यनिर्मितं धीमन्दरेणाशु विमथ्य यत्नात् । लब्धो विवेकोऽमृतमिष्टसिद्धं निपीयतां कर्णपुटैश्चिरं बुधाः ॥ ६ ॥ तापत्रयैस्तप्ततनुर्विवेकसिन्धुं विगाह्यैव जहाति तापं ॥ इदं विवेकामृतमाशु पीतं विमुक्तिसोपानपरम्परापदम् ॥ ७ ॥ श्रीहरं जगदाधारं सच्चिदानन्दमद्वयं ॥ अभिवन्द्यात्मविज्ञानोपदेशविधिरुच्यते ) ॥ ८ ॥

---

१ स्वात्मनेऽमन्त० । २ कस्मिंश्चिदशुद्धपुस्तके लब्धा इमे श्लोकाः ।

सत्त्वरजस्तमोगुणरहितस्य सर्वप्रमाणातीतस्य विद्याविद्यारहितस्य केवलस्य ब्रह्मणः सृष्टिकर्तृत्वं कथं घटते । एतादृशं ब्रह्म जगतः कारणमिति न वदन्ति सूक्ष्मतत्त्वज्ञा निरालम्बसिद्धास्तत्त्वज्ञाः सूक्ष्मब्रह्मवादिनस्तर्हि किं पुनः कारणं मायाशबलं ब्रह्म कारणमिति वदन्ति । मायाशबलं ब्रह्म किमिति चेत्-मायया सहितं मायाशबलमित्युच्यते । नन्वेतन्न संभवति चैतन्यं स्वयंप्रकाशं माया च तमोरूपा । नन्वविद्या स्वयंज्योतिरात्मानं ढौकते कथं ॥ कूटस्थमद्वितीयं च सहस्रांशुं यथा तमः ॥ १ ॥ स्वयंप्रकाशमात्मस्वरूपमविकाररूपं निर्विकारमद्वयमचलस्वरूपमविद्या कथमावृणोति सूर्यं तम इव परिहराति[1] । अविद्यायाः स्वभाव एष यत्र न संभवति तत्र संभवः प्रतीयमानमात्रत्वादेतदविद्याया भूषणं नतु दूषणं दुर्घटत्वमविद्याया भूषणं न तु दूषणं कथंचिद्घटमानत्वेऽविद्यात्वं दुर्घटं भवेत् । असंभवस्थाने संभवोऽविद्याया भूषणं न दूषणं न यत्र संभवस्तेत्र यं न संभवति तदाविद्यात्वमेव न संभवति । अपि च । असंभावनीयावभासचतुरा सेति शास्त्रमप्यस्त्येतत् । यतोऽविद्याया यथाकथंचिदपि प्रतीयमानतासामर्थ्यमस्ति तस्माच्चैतन्येऽविद्या न संगच्छत इति वक्तुं न युज्यते 'तत्सत्यानृते मिथुनीकरोति ' मै० उ० इति श्रुतेः । स्मृतिश्च[3] ' प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ॥ विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान्

---

१ ' इवेति परिहराति ' इति शुद्धम् । २ ( अ ) संसर्गाभाव इति । ३ ( अ ) अत्र स्थलेऽयं श्लोकः-यस्यात्मबुद्धिः कुणपे त्रिधातुके स्वबुद्धि ( ? ) दारादिषु भौम इज्यधीः । यत्तीर्थबुद्धिः सलिले न कर्हिं चि ज्जनेष्वभिज्ञेषु स एव गोखरः ।

॥१॥"भ.गी.। चैतन्यं मायाशबलं ब्रह्म तस्याहमिति प्रथमोऽध्यासः। सा च मायाऽनिर्वाच्या जगतः कारणं सैव माया प्रकृतिरित्युच्यते। प्रधानमिति चाव्यक्तमिति चाऽव्याकृतमिति च जगदधिष्ठानमिति च कल्पितपुरुषेति च शबलं ब्रह्मेति चैषैव मायैतावद्भिरेव नामभिर्व्यवह्रियते। एतादृश्याः प्रकृतेर्महत्तत्त्वमजायत। महदित्यादि किंनामोच्यते। सृष्टिकर्तैव सर्वशक्तिमानीश्वर एव प्रलयकाले गते तत्सृष्टिकाले चागते यथापूर्वं सर्वांल्लोकान्सृजामीत्यैच्छत्तस्य महती मनोवृत्तिर्महदिति। श्रुतिः 'स ईक्षत बहु स्यां प्रजायेय' छां. इति। स लोकानसृजतेत्यर्थः। एतादृशान्महतोऽहंकारोऽजायत सोऽहंकारस्त्रिविधोऽभूत्। एकस्य त्रैविध्यं कथमिति चेदित्थम्। श्रुतिः 'अहमिदं स्यां' इति यत आह—सात्त्विकाहंकाररूपो राजसाहंकाररूपस्तामसाहंकाररूपश्चेति त्रिविधो बभूव। एतेषां त्रयाणां तिस्रः शक्तयः कस्याहंकारस्य का शक्तिरिति चेदुच्यते सात्त्विकाहंकारस्य ज्ञानशक्ती राजसाहंकारस्य क्रियाशक्तिस्तामसाहंकारस्य द्रव्यशक्तिरस्या द्रव्यशक्तेस्तामसाहंकारसकाशादुत्पन्नानि शब्दस्पर्शरूपरसगन्धसंज्ञकानि पंच तन्मात्राणि। शब्दैकगुणमाकाशं स्पर्शैकगुणो वायू रूपैकगुणोऽग्नी रसैकगुणमुदकं गन्धैकगुणा पृथ्वी च। एतानि पञ्च सूक्ष्मभूतानि पंच महाभूतसहितानि। एतानि दश मीलित्वा तामसाहंकारसर्ग एतत्साध्यमस्य सदनुवृत्तिरुपादानम्। क्रियाशक्ते राजसाहंकारादुत्पन्नानि श्रोत्रं त्वक् चक्षुर्जिंव्हा घ्राणमिति पंच ज्ञानेन्द्रियाणि। वाक्पाणिपादपायुगुह्यानीति पञ्च कर्मेन्द्रियाणि। प्राणापानव्यानोदानसमाना इति पञ्च वायवश्च। एतानि पञ्चदश मिलित्वा राजसाहंकारसर्गएतानि

साधनान्येतेषां चिदनुवृत्तिरुपादानम् । ज्ञानशक्तिसहितसात्त्विकाहंकारसकाशादुत्पन्नानि दिग्वातार्कप्रचेतोऽश्विनाविति ज्ञानेन्द्रियाधिष्ठातृदेवताः । अग्निरिन्द्रो विष्णुर्मृत्युः प्रजापतिरिति कर्मेन्द्रियाधिष्ठातृदेवताः । चन्द्रो ब्रह्मा रुद्रः क्षेत्रज्ञ इत्यन्तःकरणचतुष्टयाधिष्ठातृदेवताः । मनसा सहैतानि सात्त्विकाहंकारसर्गः । एते पंचदश मिलित्वा मनसा सह साधकाः। एतेषामानन्दानुवृत्तिरुपादानम् । एवं साधकसाधनसाध्यत्वादिरूपमादिपुरुषस्वरूपं परमात्मनः सूक्ष्मशरीरमिदमेवोच्यते । हिरण्यगर्भोऽप्ययमेव सूत्रमपीदमेव सूक्ष्मशरीरे सत्यपि स्थूलशरीरेण विना स्थूलव्यवहारसिद्धेरभावात्स्थूलशरीरमवश्यमुत्पादनीयम् । तत्कस्मात्सकाशादुत्पन्नमिति चेत्तामसाहंकारात्पुरा कथितानि तन्मात्राणि पंच भूतसूक्ष्माणि चोपादाय पंचीकरणे कृते पञ्च महाभूतान्यजायन्त । पञ्चीकरणप्रकारश्चेत्थं–पूर्वं रसस्तन्मात्रामुपादायोदकं यथा भवति तथा कल्पयित्वावशिष्टभूतानि पंच पंच कृत्वा तेषां सर्वेषामुदकमिश्रणे कृते रसमये भूतविभागेऽस्पष्टीकृते पुरा प्रविष्टे चैतन्येऽहमिति प्रतीयमाने तेनैवाभिमानविशेषेणादिनारायणो भगवानित्युच्यते, पश्चाद्धनीभूतभूतविभागे स्पष्ट एकैकगुणोत्तरां वृद्धिं प्राप्य महाभूतानि कथ्यन्ते । एकैकगुणवृद्धिप्रकारश्चेत्थं--आकाशस्य शब्द एक एव गुणो, वायोः शब्दस्पर्शौ द्वौ गुणावग्नेः शब्दस्पर्शरूपाणीति त्रयो गुणा आपः शब्दस्पर्शरूपरसचतुर्गुणाः पृथिव्याः शब्दस्पर्शरूपरसगन्धाः पञ्च गुणाः । एवं पंच महाभूतान्येतानि कार्याणि चतुर्दश लोकान्विधाय तत्सहितान् ब्रह्मा-

---

१ (अ) ०र्मित्रः । २(अ) एतानि सा । ३अ. ०उत्पादनीये भूतविभागे

ण्डांश्च कूष्मांडबीजवन्मध्यगतचतुरधिकाशीतिलक्षयोनिप्रमुखा जी
वराशयश्च स्थूलशरीराणि च मिलित्वा विराडित्युच्यते । एत-
देव परमात्मनः स्थूलशरीरमेवं स्थूलशरीरं तत्र भवावस्थोत्पत्ति-
श्चेति द्वयमभिमन्यमानमीशचैतन्यं ब्रह्मा चैतत्त्रिविधं मिलित्वाऽ-
काराक्षरमेतदेव प्रणवगतः प्रथमः पादो हिरण्यगर्भः सूक्ष्मशरीरं
तत्र भवावस्था स्थितिः । एतद्द्वयमभिमन्यमानमीशचैतन्यं वि-
ष्णुश्चैतत्त्रिविधं मिलित्वोकारः। एतदेव प्रणवस्य द्वितीयः पादः ।
अव्याकृतं कारणशरीरं तत्र भवावस्थालयश्चैतद्द्वयमभिमन्यमान-
मीशचैतन्यं रुद्र इत्युच्यते । एतत्त्रिविधं मिलित्वा मकारस्तृतीयः
पादः । एवं विराड्हिरण्यगर्भाऽव्याकृतसंज्ञकं तनुत्रयमुत्पत्ति-
स्थितिप्रलयसंज्ञकमवस्थात्रयं ब्रह्माविष्णुरुद्रसंज्ञकमभिमानत्रयं चा-
कारोकारमकारसंज्ञात्रयं च प्रणवगतप्रथमद्वितीयतृतीयपादत्रयं
चैतावन्मिलित्वा परमात्मनः कारणोपाधिः । एतदेव तत्पदमित्यु-
च्यते । इतः परं जीवस्य तनुत्रयमुच्यते तत्कथं-पञ्चसु महाभूतेषु
पञ्चीकृतेष्वेकैकस्मिन्नेकैकेन योजिते सति तद्भूतांशाः पंचविंशति-
स्तैर्जातं स्थूलशरीरम् । ते भूतांशाः के । अस्थि पृथिव्युदकं
मांसमग्निरंत्राणि त्वग्वायू रोमाण्याकाशमेते पंच पृथिव्यंशाः ।
मेदः पृथिवी मूत्रमुदकं रक्तमग्निः शुक्रं वायुः श्लेष्माकाशमेते
पंच उदकांशाः। क्षुत्पृथिवी तृडुदकमालस्यमग्निः संगमो वायुर्नि-
द्राकाशमेते पंचाग्नेरंशाः निरोधः पृथिवी भ्रमणमुदकमूर्ध्वगमनम-
ग्निरत्यन्तं तिर्यग्गमन वायुरूर्ध्वस्थितिराकाशमेते पंच वायोरंशाः ।
भयं पृथ्वी मोह उदकं क्रोधोऽग्निः कामो वायुर्लोभ आकाशमेते
पंचाकाशस्यांशाः । एतेषां पंचानां समूहेन जातं षड्भाववि-

कारयुक्तं स्थूलशरीरमिति । ते षड् भावविकाराः के, जायते, अस्ति, वर्धते, विपरिणमते, अपक्षीयते, विनश्यतीत्येते षड् भावविकाराः । तत्र जायत इति विकार ईदृशः । मातुरुदरे रेतोरक्तयोः संयुक्तयोस्तस्य जीवस्याव्यक्तरूपेण संक्रमणं तस्य षड् भावा एव अस्तीति विकारः हस्तपादाद्यवयवसंपूर्णता वर्धत इति विकारः । एते त्रयो विकाराः । जठरस्थितस्यैव विपरिणमतेऽपक्षीयते विनश्यतीति एते त्रयो विकाराः । जठरान्निर्गतस्य पंचानां विकाराणां क्रमोऽस्ति विनश्यतीति विकारस्य क्रमो नास्ति । कथं—गर्भो जात इति न विश्वसनीयं कुतः शिश्ने मूत्ररूपेण वा निःसरति गर्भः स्रावेण वा नश्यति । स्त्रिया भुक्तैः कुद्रव्यैर्वा जठराग्निक्षोभेण विनश्यति । एतैर्विकारैर्युक्तः शरीरी मनुष्यजातीयः ब्राह्मणक्षत्रियवैश्यशूद्रभेदभिन्नः । ब्रह्मचारिगृहस्थवनस्थयतय इत्याश्रमभेदभिन्नश्चात्रिवसिष्ठकाश्यपगौतमगोत्रभेदभिन्नश्च देवदत्तयज्ञदत्तादिनामभेदभिन्नश्च कुरूपी सुरूपीति भेदभिन्नश्च स्त्रीपुंनपुंसकश्चेतिभेदभिन्नश्च कृशस्थूलह्रस्वदीर्घसामान्यादिगुणयुक्तश्च स्थूलशरीरमिन्द्रियाणि मनश्चेति साधनसंपन्नस्तत्तद्विषयाञ्जीवो निरीक्षत इतीयं जाग्रदवस्था । एतत्स्थूल शरीरं तत्र भवा जाग्रदवस्था चेति द्वयमभिमन्यमानं जीवचैतन्यं विश्वं चैतत्त्रिविधं मिलित्वाऽकारो नयनस्थानं च सुखदुःखमिश्रस्थूलभोगश्चैतावन्मिलित्वाऽकारसंज्ञां लब्ध्वा प्रणवस्य प्रथमः पादः । कथमेतदित्थं--पंचीकृतपंचमहाभूतैर्विना ब्रह्माण्डं पिण्डश्चेति संज्ञा च स्थूलशरीरमेव नास्ति । स्थूलशरीरेण

च विना तत्रोत्पत्तिरूपा जाग्रद्रूपा चावस्था नास्ति तामवस्थां विना तदभिमन्यमानस्य चैतन्यस्य[1] ब्रह्म विश्वादिसंज्ञा नास्त्येतत्त्रिविधं विनाऽकार इति संज्ञापि नास्त्येतच्चतुर्विधं विना नयनस्थानमपि नास्ति । एतत्पंचविधं विना स्थूलभोगोऽपि नास्त्येतत्षड्विधं विना प्रथमपादोऽपि नास्ति । एवमनेन क्रमेणैतावन्मिलित्वा प्रथमपाद इत्युच्यत इत्यर्थः । अस्मिन्स्थूलशरीरे सत्यप्यस्य जडत्वादेतत्प्रेरयता देहिना सता सूक्ष्मशरीरेण विना देहिनां व्यवहारसिद्धिर्यतो नास्ति तस्मात्सूक्ष्मशरीरेण[2] भवितव्यं तच्च सूक्ष्मशरीरं पंचमहाभूतकार्यमेव पंचविंशतितत्त्वात्मकं भूत्वा बुद्धिसुखदुःखेच्छाप्रयत्नद्वेषधर्माधर्मसंस्कारात्मकं नवगुणयुक्तं गमनागमनसहितं पंच महाभूतानि पंचीकृतशक्तिश्च श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणसंज्ञकं बुद्धीन्द्रियं ज्ञानशक्तिश्च वाक्पाणिपादपायुगुह्यनामकर्मेन्द्रियक्रियाशक्तिश्च प्राणापानव्यानोदानसमाननामकवायुचेष्टाशक्तिश्च मनोबुद्धिरहंकारश्चित्तमित्यन्तःकरणचतुष्टयगतज्ञानप्रवर्तकशक्तिश्चैतानि मिलित्वा लिंगमित्युच्यते । एतावद्धर्मकर्मतत्त्वमेतदेव सूक्ष्मशरीरमित्युच्यते । तत्र भवा स्वप्नावस्था । तत्कथमिति चेत्—इत्थं सर्वेन्द्रियशक्तिसहितमनःसाधनेनेह जाग्रदवस्थायामिव निद्रावस्थायां विषयान्वितसुखदुःखाश्रयान् विषयान्पश्यतीयं स्वप्नावस्था । इत्थं सूक्ष्मशरीरं तत्र भवा स्वप्नावस्था च द्वयमभिमन्यमानं जीवचैतन्यं तैजसश्चेति त्रिविधं मिलित्वोकारः कण्ठस्थानं प्रविविक्तभोगश्चैतावान्मिलित्वा प्रणवस्य द्वितीयः पादः । एतावन्मिलित्वोकारो भूत्वा द्वितीयः

---

१ अ. जीवचै० । २ अ. °रेणावश्यं ।

पाद इति कथमित्थम्—भूतसूक्ष्मैर्विना महासूत्रं पुर्यष्टकसंज्ञकं सूक्ष्मशरीरमेव नास्ति तत्सूक्ष्मशरीरं विना तत्र स्थितिरूपा स्वप्नरूपा च वर्तमानावस्था नास्ति । एतद्द्वयं विना विश्वस्तैजस इति नामापि नास्ति । एतत्त्रिविधं विनोकारसंज्ञापि नास्ति । एतच्चतुर्विधं विना कण्ठसंज्ञापि नास्ति । एतत्पंचविधं विना प्रविविक्तभोगोऽपि नास्ति । एतत्षड्विधं विना द्वितीयपाद उकारोऽपि नास्त्यतो हेतोरेतत्सर्वं द्वितीयपाद उच्यते । एतत्स्थूलसूक्ष्मकारणं तमोमायामोहाज्ञानसंज्ञकं मूल[1]विद्यात्माज्ञानं प्रोच्यते । कारणशरीरमप्येतदेव । ईदृशं कारणशरीरं तत्र भवा सुषुप्त्यवस्था सा कीदृशीति चेदुच्यते । जाग्रत्स्वप्नावस्थाजनितसर्वसंस्कारलये सति मनस्यात्ममूलाविद्यायां लीने संस्कारमात्राविशिष्टे सति पुरुषो विश्रम्य निर्विकल्पसुखानुभवो भूत्वावतिष्ठत इतीयं सुषुप्त्यवस्था । एतद्द्वयमभिमन्यमानं जीवचैतन्यं प्राज्ञः । एतत्त्रिविधं मकारो हृदयस्थानमानन्दभोगः । एतावान्मिलित्वा प्रणवस्य तृतीयः पादः । एताघन्मिलित्वा मकार इति संज्ञां लब्ध्वा प्रणवस्य तृतीयः पादः कथमित्थं—सर्वकारणयोगमायां विना कार्यकारणपरिणता साऽविद्या नास्ति । अत्र स्वापाव्याकृतरूपेण तत्कारणशरीरं विना लयरूपेण सुषुप्तिरूपेण च वर्तमानावस्थापि नास्ति तदुभयं विनेश्वरः प्राज्ञ इति नामापि नास्ति । एतत्त्रिविधं विना मकार इति वक्तुं न शक्यते । एतच्चतुर्विधं विना हृदयस्थानं नास्त्येतत्पंचविधं विनानन्दभोगोऽपि नास्ति । एतत्षड्विधं विना तृतीयपाद इति वक्तुं न शक्यतेऽतो ज्ञानं सर्वं प्रणव एव । अकार एवोकार उकार एव

१ अ. स्थूला.

मकारो मकारः प्रत्यक्चैतन्यमात्रत्वं विना नास्ति । एतत्कथं, त्वमेव निर्विशेषप्रत्यग्रूपेण निरुपाधिको भूत्वाहमिति प्रतीयमानस्त्रिपुटीरूपेणाखिलसच्चिदानन्दे विविक्ते प्रतीयमान उभयनाम्नो व्यक्तरूपस्य प्रपंचस्य त्वमेव कारणं कार्यं चातो हेतोस्त्वमेव कारणं कार्यं चेति श्रीगुरुरुपदिशति स्थूलं सूक्ष्मं कारणमिति तनुत्रयं च जाग्रत्स्वप्नं सुषुप्तिरित्यवस्थात्रयं च विश्वतैजसप्राज्ञेति नामत्रयं चाकारोकारमकारेति नामत्रयं च नयनकण्ठहृदयामिति स्थानत्रयं स्थूलप्रविविक्तानन्देति भोगत्रयं च प्रणवस्य प्रथमद्वितीयतृतीयेति पादत्रयं चेत्येतावत्सर्वस्य पुनः पुनः समुदायस्याश्रयभूता चतुर्थी तनुः । अत्रभवा तुरीयावस्था । एतद्द्वयमभिमन्यमानं जीवचैतन्यं प्रत्यगात्मानन्दावभासभोगश्चैतावत्सर्वं मिलित्वा कार्योपाधिरेतदेव त्वंपदमुच्यते त्वंपदमभिमन्यमानस्य सतो व्यतिरिक्तस्य तवैव संसारः कीदृश इति चेदुच्यते-चतुरधिकाशीतिलक्षयोनिमुखेषु पतित्वा जनित्वा मृत्वा चक्षुःशूलोदरवेदनामूलव्याध्याद्याध्यात्मिकतापं च पुत्रमित्रकलत्रादिजनिताधिभौतिकतापं च चन्द्रसूर्यग्रहादिजनिताधिदैविकतापं चानुभवन्गर्भनरकेषु पतनं यदनुभवति संसार एतादृशस्य संसारस्य निवृत्तिः कथं नु नाम भवेदिति विचार्य तीर्थस्नानादिभिः कायशुद्धिं लब्ध्वा पुराणश्रवणेन महापुरुषगोष्ठ्या च तदधिकारी भूत्वा सद्गुरुप्रसादेन संसारनिवृत्तिर्भवतीति श्रुत्वा सर्वज्ञत्वेन विदितमखिलवेदान्तार्थवेदिनं तीर्णसंसारसमुद्रं विनष्टाशेषसंशयं निरपेक्षं विद्यानिधिं विद्यादानविनोदिनं निरालम्बसिद्धं स्वयमजानानो गुरुं

---

१ अ. सुखदुःखमा० ।

त्रिज्ञापयति संसारनिवृत्तिं कुरु ममेति साष्टांगं दण्डवत्प्रणम्य 'समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं गुरुं तत्त्वज्ञानार्थमभिगच्छेत्' (मु० ×) इति श्रुतेः। यतो गन्धपुष्पादीनि गुरवे समर्प्य प्रार्थयेत्। भगवन्भवसन्तापादातुरोऽस्मीति पाहि माम्॥ कर्मभ्यो निर्वृतिर्नास्ति ज्ञानदाशु प्रसीद मे॥ १॥ अपि च। भगवन्भवसंभूत दवदाहप्रपीडितं॥ तत्त्वबोधसुधावर्षैरुज्जीवय कृपाम्बुधे॥ २॥ इति विज्ञापितः सद्गुरुरुपदिशति तत्कथमित्थम्--तव परमात्मना सहैकत्वज्ञाने जाते सति संसारनिवृत्तिर्भवतीति[२]। तत्केन भवति तत्त्वमसीति महावाक्योपदेशेन महावाक्यार्थबोधे जाते (सति संसारसन्तापनिवृत्तिर्भवति[३]) तानि वाक्यानि चत्वारि ब्राह्मणादीनां त्रयाणां वर्णानां श्रुतिर्नवकृत्व आदिशेत्। आचार्य एतानि वाक्यानि नवकृत्वः शिष्यमुच्चारयति सति शिष्योऽहं ब्रह्मास्मि ब्रह्माहमस्मीत्युपदेशकाले स्वीकृत्य स्वचित्तानुसारेण[४] सर्वाराधनं श्रीगुरवे कुर्यात्। तादृशसामर्थ्याभावे श्रीगुरुमेवाराधयेत्। सैव सर्वदेवतातुष्टिः। ब्रह्मा विष्णुश्च रुद्रश्च देवता मुनयस्तथा॥ कुर्वन्त्यनुग्रहं तुष्टा गुरौ तुष्टे न संशयः॥ १॥ इति यत आह शास्त्रं सर्वस्य जगतो मम च संसारस्यैतदेवोत्थापनमिति वदन्गुरवे नमस्कुर्यात्। अतः परं विधिकिंकरपरत्वं विहाय श्रीगुरुकिंकरः सन्नुपादिष्टमर्थमेकान्ते मननं विधाय सम्यग्ज्ञात्वा स्वगुरुं विज्ञापयेत्। कथं विज्ञापयेदित्थं—परमात्मा स-

---

× एतदर्थप्रतिपादिका वर्णसाम्यबहुला मुण्डकश्रुतिः। १ अ. भवसागरा०। २ अ० भविष्यति। ३ एतद्वाक्यपूरकमपेक्ष्यते। ४ अ० स्ववित्तानुसारेण।

र्वज्ञः सर्वेश्वरः सकलजगदुत्पत्तिस्थितिप्रलयकारणं च सर्वकर्मफलप्रदश्च जातिवर्णाश्रमरहितश्चाद्वयपरमानन्दस्वरूपी परिपूर्णश्च। अहं तु दुःखी प्रादेशिको जडो जातिवर्णाश्रमविशिष्टश्च सद्वयः परिच्छिन्नश्चेत्थं मम परमात्मना सहैकत्वं कथं सिध्यतीति चेदुच्यते तान्विरुद्धार्थान्परिहायैकत्वं सिध्यतीति श्रीगुरुराज्ञापयेत् तद्विरुद्धार्थपरिहरणं कथमिति चेदित्थं—विराडित्युच्यमानं स्थूलं शरीरं परमात्मा न भवति कथमित्थं तद्यतः पंचमहाभूतेभ्यो भवति तर्हि पंचमहाभूतान्येव परमात्मा भवतीति चेन्नैवं तान्यपि पंच महाभूतानि परमात्मा न भवति। तद्ब्रह्म निःप्रपंचस्वरूपं 'अस्थूलमनणु' बृ. इति श्रुतेः। स विराड्यतो ब्रह्म न भवति। अतस्तत्र भवावस्थोत्पत्तिश्च ब्रह्मेति नाम चाकारेति संज्ञा च प्रणवस्य प्रथमपादश्च परमात्मा न भवति स विराट् परमात्मा न भवतीति चेत्तर्हि हिरण्यगर्भसंज्ञकं सूक्ष्मशरीरं परमात्मा भवत्विति चेन्न तत्सूक्ष्मशरीमहंकारत्रयाद्यत उत्पद्यते। स तु परमात्मा निरहंकारो निर्गुणश्च। यदा सूक्ष्मशरीरं परमात्मा न भवति तदैव तत्र भवावस्थास्थितिश्च विष्णुरिति नाम चोकारेति संज्ञा प्रणवस्य द्वितीयपादश्च परमात्मा न भवति। तर्हि प्रकृतिरित्युच्यमानं तत्कारणशरीरं परमात्मा भवतु। न। यतो विविच्यमानायाः प्रकृतेर्जडत्वात्। यदा प्रकृतिः परमात्मा न भवति तदा तत्र भवावस्था लयश्च रुद्र इति नाम च मकारेति संज्ञा प्रणवस्य तृतीयः पादः सर्वज्ञः सर्वेश्वरः सर्वजगत्कारणं च परमात्मा न भवति। कथमित्थं विराट्प्रभृति तृतीयपादपर्यन्तं सर्वसंज्ञासहितः सर्वोऽपि

१ अ. तद्यथा तदितरपंच°। २ अ. प्रकृत्या भिन्नः। जडत्वात्प्रकृतेः।

प्रपंचस्तत्पदवाच्यो भवति तस्मिन्परित्द्दते यदवशिष्टं शुद्धाद्वयानन्द-चैतन्यं तत्पदस्य लक्ष्यमेतदेव तत्पदशोधनं नाम भागलक्षणापीय-मेव । एवमेव जीवस्यापि तनुत्रयं निरस्येदिति श्रीगुरुराह । तत्कथमिति चेदित्थं—पंचीकृतपंचमहाभूतानीति त्वया ज्ञायन्ते तानि त्वं न भवसि यतस्तान्यात्मानं न जानन्ति तेषां मध्ये परस्पर-मपि न जानन्ति । अत्यन्तजडान्यतस्तद्भूतांशसंभवमिदं स्थूलं शरीरमपि त्वं न भवसि पंचमहाभूतांशैरस्य देहस्योद्भवः कथमित्थं—यतस्तानि सर्वाणि भूतान्यस्मिञ् शरीरे दृश्यन्ते तानि सूक्ष्माण्यनु-वृत्तौ कथितानि । अस्थिमांसप्रभृतीनि पंचमहाभूतानि तेषां समूह एवेदं शरीरं तानि भूतानि यतस्त्वं न भवस्यतस्तदंशा अपि त्वं न भवसि । तदंशभूतमपि शरीरं त्वं न भवसि सुखदुःखे जानानो देह एवाहमन्यत्[1]स्वरूपं नास्तीति पृष्टः सद्गुरुरुपदिशति देहो न जानाति सुखदुःखे यतो भौतिको दृश्योऽत्यन्तजडश्च भूतानि कदापि यतो न जानन्ति दंशा अपि न जानन्ति । दंशभूतो देहः कथं जानी-यात् । अपि च देहः सन्नपि निद्रां मूर्छां च न जानात्यतोऽत्य-न्तजडः । चोरे गृहं प्रविश्यापहृत्याभरणानि नयत्यपि न जाना-त्यतोऽत्यन्तजडः । जन्मकाले परामृश्यमानो देहो मलवदत्यन्ता-शुद्ध एव । अपि च दशदोषदुष्टो देह आत्मा न भवतीति सि-द्धम् । के ते दोषा दश । अशुचित्वम् १ विनाशित्वम् २ शो-च्यत्वम् ३ दुर्गन्धित्वम् ४ अस्थिरत्वम् ५ तूलखण्डानिचयवद्द-ग्धत्वम् ६ शिथिलत्वम् ७ अध्रुवत्वम् ८ आमिषत्वम् ९ त्रिमल-वातपित्तश्लेष्मात्मकत्वम् । पुनरप्यध्रुवतां प्रदर्शयामि । पंचीकृत-

---

१ अ. ममान्यत् ।

पंचमहाभूतानि कारणचतुष्टयेन सह स्थित्वा स्वस्वनिजस्थानमेव गन्तुमभियतन्ते। तथाहि—आकाशोऽवकाशो भवितुमिच्छति। पवनो धावितुमेव यतते। जलं द्रवीभूय जिगमिषति। पृथिवी विशीर्णा भवितुमिच्छति। एवंभूतानि स्वस्वमार्गेण गन्तुमिच्छन्तीति देहस्यानित्यता तावन्निश्चिता। एवं महाभूतपंचीकृतशरीरं नियतभिन्नवृत्तिभिर्विनश्यति। घटो यथा दृश्यो जडश्च तथा देह इति सद्गुरुरुपदिशति। घटो यथा जातस्तथैव तिष्ठति देहस्तु वर्द्धतेऽतो घटवज्जडो देह इति वक्तुं न शक्यत इति पृष्टः सद्गुरुरुपदिशति। वृद्धिमानिति देहः किं चैतन्यं भवति। वृद्धिमानपि चैतन्यं न भवतीति कुत्र दृष्टमित्याशंक्य दृष्टान्तान्कथयति। तृणं गोमयं च यत्र निक्षिप्यते स राशिः किं वर्द्धमानश्चैतन्यं भवति। किंवा घटीयंत्रकूप उद्गीर्यमाणमृत्तिकावर्द्धमाने तीरे किं चैतन्यं भवति। कुड्यादिनिर्मात्रा मुहुर्मुहुर्निक्षिप्यमाणमृत्तिकावर्द्धमानवेदिका किं चैतन्यं भवति। एवं प्रतिदिनमन्ने समर्प्यमाणे देहरूपो मृत्संचयः सम्यग्वर्धमानोऽप्यत्यन्तजड एव। अतो हेतोरेतत्स्थूलशरीरं त्वं न भवसि। तत्र भवा जाग्रदवस्था विश्व इति नाम चाकारसंज्ञा च नयनस्थानं च स्थूलसविकल्पकविषयसुखदुःखमिश्रभोगाश्च त्वं न भवसि। जातिवर्णाश्रमाश्च त्वं न भवसि। सर्वकर्तृत्वं च त्वं न भवसि। यतः शास्त्रमेवाह—यावद्देहात्मविज्ञानं बाध्यते न प्रमाणतः। प्रामाण्यं कर्मशास्त्राणां तावदेवोपपद्यते॥ इति। अहं देवो भवामीति यदा ज्ञानं जातं तदैव सर्वकर्तृत्वमपि नास्ति। सत्यमहं

१ अ. प्रणवगतप्रथमः पादस्त्वं न भवसि षड्भावविकारश्च त्वं न भवसि।

स्थूलशरीरं न भवामीति । किन्त्वस्मिन्संसारे चतुरधिकाशीतिल-क्षयोनिषु भ्रममाणः स्वर्गनरकादिसुखदुःखे अनुभवन् सूक्ष्मशरीरमेवाहं भविष्यामीति शिष्येन पृष्टः सद्गुरुराह—तच्चतुर्विंशतितत्त्वात्मकं सूक्ष्मशरीरमपि त्वं न भवसि । भूतानि जडानि तदंशाश्च जडास्तत्संयोगभवानीन्द्रियाण्यपि जडानि कथमिन्द्रियाणि जडानीति वक्तुं शक्यते । इन्द्रियाणि सुखं दुःखं चानुभवन्ति यदि जडानि भवेयुः कथमनुभवेयुरिति पृष्टो गुरुरुपदिशति । निद्रायां मूर्च्छायां च स्वविषयं देहमपि ज्ञातुं न शक्नुवन्ति । यतः श्रोत्रेन्द्रियं स्वविषयं शब्दं ज्ञातुं नेष्टेऽन्यविषयमपि । त्वगिन्द्रियं स्वविषयं स्पर्शं ज्ञातुं न समर्थमन्यविषयमपि चक्षुरिन्द्रियं स्वविषयं रूपं न जानाति । अन्यविषयं च । जिव्हेन्द्रियं स्वविषयं रसं न जानात्यन्यविषयं च । घ्राणेन्द्रियं स्वविषयं गन्धं न जानात्यन्यविषयं शब्दमपि न जानातीत्युभयथापि जडानीन्द्रियाणि । मणिप्रदीपवद्विषयज्ञानसाधनान्येव न त्वात्मा । एवं कर्मेन्द्रियाण्यपि निद्रामूर्च्छयोः स्वं स्वं व्यापारं न कुर्वन्ति वाग्वक्तव्यस्य नेष्टे गृहप्रविष्टं चौरमप्यपसरेति न वदाति । पाणीन्द्रियमपि चौरेण व्हियमाणं बलादादातुं न शक्नोति । पादेन्द्रियमपि चौरमनुधावितुं न शक्नोति । पाय्विन्द्रियमपि स्वव्यापारं कर्तुं न जानाति । गुह्येन्द्रियमपि स्वविषयमनुभवितुं न जानाति । एवमुभयथा जडानि कर्मेन्द्रियाणि किन्तु क्रियासाधनान्येव कर्मेन्द्रियाणि नात्मा । प्राणे सति देहश्चेष्टत इन्द्रियाण्यपि । प्राणे त्वसति देहश्चेष्टाहीनो भवति । इन्द्रियाण्यपि तादृशानि भवन्ति ।

१ अ. पंचभूतानि त्वं न भवसीत्यवोचाम । अतस्तु कार्यभूततत्त्वसमूहात्मकं । इत्यधिकं ।

अतः प्राण एवात्मा भवत्विति पृष्टः सद्गुरुराह प्राणोऽपि नात्मा भवति । सुषुप्तौ स्वप्ने चोच्छ्वासनिश्वासरूपेणाविच्छेदेन प्रवर्तमानोऽप्ययमन्तर्बहिश्च न जानाति देहवदेव । तत्कथमित्थं—चौरे गृहं प्रविश्य भूषणान्यपहृत्य निर्गतेऽपि शरीरेषु स्थितेषु विश्रम्य पतितेष्वपि, एकस्मिन्पर्यंके बहूनां शयने संमर्दमसहमाने कस्मिंश्चिन्निर्गतेऽपि स्वस्त्रियां स्वसमीपे सुप्त्वा पतिं सुप्तं ज्ञात्वा पुमांसमन्यं गत्वा व्यभिचर्य पुनश्चागतायामपि समीपस्थितमप्यर्थमन्यस्मिन्नपहरत्यपीत्थं न कर्त्तव्यमिति यतो न निवारयति । अतः प्राणो जड एव । प्रबुध्य जानातीति चेन्न सर्वावस्थास्वप्युच्छ्वासनिश्वासरूपेणास्योपरतिर्नास्त्येव । अपि च स्थित्वाप्यसौ न जानाति कथमिदानीं कस्मिन्भागे श्वासो वर्तत इति पृष्टेऽप्यस्मिन्भागेऽहं वर्त इति वक्तुं न जानात्यतः स्थित्वापि न जानाति । अपि चात्मप्राणयोर्भेदव्यपदेशश्च लोके विद्यते । तथाहि कस्मिंश्चिद्रिपौ कस्यचिद्धनमपहृत्य बलात्कारेणापगच्छति सति तव प्राणो मम हस्ते वर्तत इति वदति । स्वामिनं प्रति कश्चिद्वदति ममार्थः प्राणश्च त्वदधीन इति कश्चिज्जायापत्यादिषु क्लिष्टेष्वनशनेन वदति मम प्राणा अनर्थका इति । एवं स्वस्य प्राणः स्वस्माद्भिन्न इत्यनुभवसिद्ध एवायमर्थः । अतः प्राण एवाहमित्यनया बन्धनरज्ज्वात्मा न बध्यः । जडश्चेत्प्राणस्तर्हि कथं जडं शरीरं चेष्टयेत् । उत्तरं, जडोऽपि च जडं चेष्टयँल्लोके दृश्यते प्रचण्डमारुतो गृहाच्छादनं तृणपर्णाद्युत्क्षिप्याकाशे भ्रामयन्वर्तते । जडवृक्षस्य पर्णशाखादिकं भंक्त्वान्यत्र पातयति पलालं च गगने नर्तयति । अन्यत्र स्थितं छत्रादिकं गृहात्परितः क्षिपति । जड-

स्याप्ययं स्वभावः । नैतावताप्यात्मा भवति प्राणस्य चेष्टा स्वतंत्रा भवति किंतु पुरुषाधीनैव । यथा भस्त्रां ध्मापयित्वा भस्त्राधीना वाता यावन्तः किं भस्त्राध्माता भवन्ति । किन्तु भस्त्राध्मापयिता यस्तद-धीना भवन्ति । तथा पुरुषस्य प्राणस्थितो वातः पुरुषो न भवति यन्त्रस्थापितदारुपुत्रिकाचेष्टावत् प्राणचेष्टा पुरुषाधीनैव । सूत्रचे-ष्टापि सूत्रधाराधीना पेटिकामध्ये स्थिताः स सूत्रदारुपुत्रिकाः सूत्रधारेऽपगते किं स्वयं चेष्टन्ते किं पेटिकामुत्पाट्यान्यत्रापसृत्य नृत्यन्ति वा । एवमत्राप्यवस्थात्रये प्राणस्य चेष्टा विश्वाद्यधीनैव न स्वतन्त्रा पुरुषचेष्टा तु स्वतंत्रैव नाहंकारमपेक्षते न वा प्रयत्नं तस्य संनिधिसत्तामात्रेणैव देहेन्द्रियप्राणादयश्चेष्टन्ते । अयस्कान्तसंनिधि-मात्रेणापि जडमपि लोहं यथा चेष्टते । अत एतावद्भिर्हेतुभिः प्राणो जड इति बहुशो बोधितोऽसि । अतः प्राणापानादयः सर्वेऽपि स्वविषयान्कर्तुं[1] स्वातंत्र्येण न समर्था अन्यदीयव्यापारमपि कर्तुं न समर्थाः । अपिच पंचमहाभूतानां तदंशानां च स्वातं-त्र्येण चेष्टा केनापि प्रकारेण न संभवतीति । तदुद्भवानामपि प्राणादीनां स्वातंत्र्येण चेष्टा न संभवत्येव । अतो हेतोर्जडा एव प्राणादय इति निश्चयः । मनो बुद्धिरहंकारश्चित्तमित्यन्तःकरण-चतुष्टयमपि जडमेव । तत्र मनः संशयितुमेव शक्नोति न निश्चेतुम् । बुद्धिर्निश्चेतुमेव शक्नोति न संशयितुम् । अहंकारो गर्वितुमेव शक्नोति न संशयितुं नापि निश्चेतुम् । चित्तं विचारयितुमेवेष्टे न पूर्वोक्तं निश्चयं कर्तुमीष्टे । इत्थमेतेषां मध्य एकस्य विषयमन्यन्ना-नुसंदधात्यतो जडमन्तःकरणचतुष्टयम् । नन्वेषोक्तिः पलायमानो जड इत्युक्तिरेवोपादानक्षमा न भवति । अन्यग्रामविषयमन्यग्रामी

---

१ अ भोक्तुमित्यधिकं ।

न जानाति न त्वन्योऽन्यवृत्तं जानाति । अथ च जडो न भवति । अन्यगृहवृत्तान्तं वयं न जानीमोऽस्मद्गृहवृत्तान्तमपि नान्ये जानन्ति । अथापि वयमन्येऽपि जडा न भवामः । एवमन्तःकरणचतुष्टयमन्योन्यविषयमननुसन्धानमपि जडमिति वक्तुं न शक्यत इति पृष्टः सन्गुरुराह—तन्मनः सा बुद्धिरित्युच्यमाने प्रतिक्षणविलक्षणे अयुगपद्भाविनी । तयोरेकस्य नाशेऽन्योत्पत्तिः । अतोऽनात्मभूते । यदुत्पत्तिमद्भंगुरं च तद्देहादि नात्मेत्यवोचाम । मनश्चोत्पत्तिमत् 'आत्मनो मनो जातम्' इति श्रुतेः । तत्कारणरूपात्त्वत्त एवोत्पद्यते त्वय्येव लीयते मनसो व्यभिचारित्वमप्यस्ति विकारित्वं चातो नात्मा । त्वं त्वजातोऽव्यभिचारी च सदा विद्यमानः करणानां करणवृत्तीनां च पृथग्भूत्वा साक्षी च तानि त्वं सदा जानासि ते त्वां न जानन्तीति तवैवानुभवः । येन यद्दृश्यते लोके न तत्तेनैव दृश्यते । घटनेत्रादिवत् । तस्मान्नाहं दृश्यत्वमात्मन इति शास्त्रमाह यतः । चतुर्वृत्तिरूपमन्तःकरणं जडम् । तेन मनोबुध्याद्यो ज्ञानेन्द्रियादयश्च ज्ञानप्रवर्तकसाधनान्येव नात्मा । एवमिन्द्रियसमूहः सदा न जानाति । एकः सन्वार्तां कथ्यमानां तां शृण्वन् पृष्टः सन्पुनः कथयति । अन्तःकरणबाह्यकरणेष्वप्यनुसन्धाता पुरुषो देहोऽपि न भवति ।

१ अ० 'एतस्मादात्मन आकाशः संभूत आकाशाद्वायुः । वायोराग्निः । अग्नेः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नाद्रेतः । रेतसः प्रजा इत्येका श्रुतिः । यथा महतो वन्हेः प्रज्वलतः क्षुद्रा विस्फुलिंगा विचरन्ति । एवमेवामुष्मादात्मनः सर्वे प्राणाः सर्वे देवाः सर्वे लोकाः प्रजायन्ते' एवं नाना श्रुतयः सन्ति ।

इन्द्रियाण्यपि न भवन्त्यन्तःकरणमपि न भवति । एतेषु सत्स्व-सत्स्वपि स्वयं हि साक्षी विद्यमानस्तिष्ठति । एवमिन्द्रियसमु-दायात्मकं सूक्ष्मशरीरमप्यात्मा न भवति तत्र भवावस्थातद्द्वयम-भिमन्यमानस्य जीवचैतन्यस्य तैजस इति नामोकारेति संज्ञा क-ण्ठस्थानं मायामयेषु विषयेषु प्रविविक्तरूपः सुखदुःखभोगश्च नास्ति । ज्ञानेन्द्रियसाधका विषयाः कर्मेन्द्रियसाधकं कर्मकर्तृत्वं प्राणनादि साधकं च नास्ति जानुनि भग्न इव लिंगशरीरभंगे ग-मनागमनं च नास्ति लिंगशरीरं गमनागमनसाधकमित्युच्यते । एवं तनुद्वयं विहाय त्वं क इति प्रश्ने न जानामीति शिष्येण व-क्तव्यम् । किं न जानासीति पुनः प्रश्ने तदज्ञानं विषयं न भव-तीत्यात्मानं जानामीति वदति । एतदेवात्माज्ञानमिदमेव कारण-शरीरमस्याश्रयस्त्वमेव । तत्कथमित्थं—त्वमेवाज्ञानं शिरसा वह-सि त्वां विनान्यः कोऽपि न जानामीति न वदति तत्कथमुच्यते यथा यो ज्ञानभ्रमस्तस्य भ्रान्तिं सम्यग्वेत्ति स जडो न, अविद्या-वेत्तृत्वादतो ज्ञानं जडस्य न । त्वयि स्थितस्याज्ञानस्याश्रयस्त्वमेव तज्ज्ञानमपि त्वमेव । त्वयि स्थितमज्ञानं यतो जानासि । अत-स्तस्य साक्षित्वमेव त्वया दृश्यमानं त्वं न भवसीति स्थूलसूक्ष्मश-रीरादिव कारणशरीरादपि भिन्नस्त्वम् । एवमाश्रयस्य साक्षिणो विलक्षणरूपेण भिन्नस्य तवैतत्कारणशरीरं तत्र भवा सुषुप्त्यव-स्था च तद्द्वयमभिमन्यमानस्य जीवचैतन्यस्य प्राज्ञ इति नाम मकार इति संज्ञा च हृदयस्थानं च निर्विकल्पकविषयसुखभोगश्च प्रणवगतस्तृतीयः पाद इति नास्ति । एवं स्थूलसूक्ष्मकारणश-

रीरप्रभृति तृतीयपादपर्यन्तमेतावदेव दृश्यं जानानो विवेकोपाधिको द्रष्टा । इयं तवैवावस्था । अस्या अपि च तवान्यावस्था भविष्यतीति न शंकनीयम् । नास्त्यवस्था पञ्चमीति श्रुतिराह यतः । अयं विवेकोपाधिरिति निरालंबसिद्धो भवति । द्रष्टादृश्यदर्शनसंस्कारस्य लयस्योदयस्य चाश्रयभूता मायातनुस्तत्र भवा तुरीयावस्था तद्द्वयाभिमानिनो जीवचैतन्यस्य प्रत्यगात्मेति नाम । इयं मायातनुश्च तद्धर्माश्चैते विवेकेन विलक्षणा विज्ञातुं न शक्यन्ते । गुरुर्यदानुगृह्य प्रदर्शयति तदा विलक्षण एव तनुचतुष्टयप्रभृतिः सर्वोऽपि प्रपंचस्त्वंपदवाच्यो ज्ञायते । एतदेव त्वंपदशोधनं नाम भागलक्षणा च । एतावता सर्वसाक्षिभूतं चैतन्यमेव त्वंपदस्य लक्ष्यमेतदेव शुद्धं नाम । इत्थं लक्ष्यस्यैकत्वं श्रुतिस्तत्त्वमसीति बोधयति । श्रीगुरुरुपदिशाति-तत्पदलक्ष्यं शुद्धाद्वयानन्दचैतन्यं त्वंपदलक्ष्यं प्रत्यगपरोक्षचैतन्यं त्वमेव भवसीति 'अहं ब्रह्मास्मि' बृ० इति श्रुतिं गृहीत्वा गुरोराज्ञया ब्रह्मणा सह शिष्यः स्वस्यैकतां प्रतिपद्यते । अस्मिन्नर्थे वचनं 'पिण्डब्रह्माण्डयोरैक्यं लिंगसूत्रात्मनोरपि' इति। तव स्थूलशरीरं परमात्मनः स्थूलशरीरं चैकमेव जातं तव सूक्ष्मशरीरं परमात्मनः सूक्ष्मशरीरमेकमेव जातं स्वापसंज्ञकं तव कारणशरीरमव्याकृतसंज्ञकं परमात्मनः कारणशरीरं चैकमेव जातं क्षेत्रज्ञस्त्वं परमात्मासि । शिष्यः शंकते । क्षेत्रज्ञसंज्ञकोऽहं परमात्मा भवामीति वक्तुं न शक्यते । मायातनोः पाश्चात्यतनूनामिव निरसनं नास्ति । तत्कारणशरीरमपि भावरूपाज्ञानमिति प्रतीयते । अतः स्वापाव्याकृतयोरैक्यमिति वक्तुं न शक्यते मम त्वविद्याया इव

भावरूपता नास्तीति कथमेकेन सह मां योजयितुं शक्यते। उत्तरं, तदभाव एव ते परोक्षस्तत्कथमित्थं—एकत्वानुसंधाने स्थिरीकृत एक एव परमात्मा कार्यकारणोपाधिना जीवः पर इत्युच्यते स्वभावतस्त्वेक एव 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः। कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते' इत्युपाधिद्वयपरित्यागे पूर्णबोधस्वरूपमेवावशिष्यते। तत्पदलक्ष्यस्य त्वंपदलक्ष्येण सहैकत्वे सति परोक्षं सद्वितीयत्वं निवर्तते। त्वंपदलक्ष्यस्य तत्पदलक्ष्यैकत्वे दुःखित्वं प्रादेशित्वं निवर्तते। तदुक्तं 'तदस्त्वमा विशिष्टस्य परोक्षत्वं निवर्तते। त्वमस्तदा विशिष्टस्य दुःखित्वं विनिवर्तते॥ प्रत्यक्त्वं ब्रह्मणः सिद्धं ब्रह्मत्वं प्रत्यगात्मनः। वाक्यादेव यदि ज्ञानं श्रुतं किं क्रियते वृथा॥' ब्रह्मणः प्रत्यगात्मत्त्वं प्रत्यगात्मनो ब्रह्मत्वं च वाक्यार्थज्ञानेनैव यदि सिद्ध्येत्तदान्तरा क्रिया निवर्तते। इमं सालम्बबोधमेव गृहीत्वैतल्लक्ष्योपरि विरोधः प्रतिभासेत्स शिष्यो गुरुं विज्ञापयति कथमित्थं— मया दृश्यमानमिदं सर्वमहं न भवामीति त्वदाज्ञयाज्ञासिषम्। एतल्लक्ष्यं मया ज्ञातं लक्ष्यान्योऽन्यतादात्म्यमपि मया ज्ञातम्। एतत्तु न विश्वसिमि। ब्रह्म भवतु सच्चिदानन्दनित्यापरोक्षं ममत्वपरोक्षं न भवति। अहं तु नित्यापरोक्षोऽवतिष्ठे। एतद्ब्रह्माहमस्मीति मामनुभवपन्थानं को वारोहयति। को वाहमिति पृष्टः सद्गुरुरुपदिशति कथमित्थं—आरूढस्य निरालम्बबोधस्याधिकार्ययं भवतीति विचिन्त्याखिलमपि संशयं निरस्य श्रीरामनाथमनन्तानन्दब्रह्मविद्यानिधिमपारावारं निरालम्बसिद्धं परमावधूतं श्रीराम-

चन्द्रमुनिमात्मनि विचिन्त्य नमस्कृत्य च श्रीमुक्ति नाथयोगीश्वरः स्वशिष्यान्सर्वसंशयरहिताञ्ज्ञानज्ञातृज्ञेयरहितान्कृत्वावबोधयति कथमित्थं--कोऽहमित्युक्तवान्भवांस्त्वमेव नान्यः। तव निजस्वरूपमन्यन्नास्ति निजस्वरूपे तिष्ठतस्तव कोऽहमित्ययं भ्रमः। उपाधौ तिष्ठतोऽपि यस्मिन्कस्मिन्भावे सज्जतोऽपि तव कोऽहमिति प्रश्नो न युज्यते यतो नानोपाधिकस्वरूपविराट् तद्धर्मेषु सज्जंस्तस्यामवस्थायां हिरण्यगर्भेतद्धर्मेषु सज्जंस्तस्यामप्यवस्थायां तदेवाव्याकृततद्धर्मेषु सज्जंस्तस्यामप्यवस्थायां सर्वभावरहितः सञ्जगद्बीजभावेषु सज्जंस्तस्यामप्यवस्थायां ब्रह्मादिनामसु सज्जंस्तस्यामप्यवस्थायां तव कोऽहमिति प्रश्नो न युज्यते। एतत्स्थूलशरीरं तद्धर्मेषु सज्जंस्तस्यामप्यवस्थायां तव कोऽहमिति प्रश्नो न युज्यते। एतत्सूक्ष्मशरीरतद्धर्मेषु सज्जंस्तस्यामप्यवस्थायां तत्कारणशरीरतद्धर्मेषु सज्जंस्तस्यामप्यवस्थायां तव कोऽहमिति प्रश्नो न युज्यते। तत्पदलक्ष्यस्वरूपः संस्त्वमसीत्यस्यामप्यवस्थायां कोऽहमिति प्रश्नो न युज्यते। त्वंपदलक्ष्यरूपः सन्मायातुरीयावस्थायां कोऽहमिति प्रश्नो न युज्यते। उभयत्राच्यान्युभयलक्ष्याणि जानन्सर्वद्रष्टा भवान्प्रागेव त्वं सर्वभावरहितः सर्वप्रमाणातीतः सर्वसंशयरहितश्च यस्मिन्कस्मिन्नपि सज्जन्संशयं कोऽहमिति यतस्त्वं पृच्छस्यतस्तव कोऽहमिति संशय एव नास्ति। त्वं जानानोऽपि न भवसि त्वमजानानोऽपि न भवसि त्वं निजं स्मृतवानपि न भवसि त्वं निजं विस्मृतवानपि न भवसि। अन्तरात्मा सञ्ज्ञानस्योदासीनः सन्कोऽहमिति वदसि। अविच्छिन्नज्ञानस्वरूपो भवान्कोऽहमिति

वदसि । अतस्तव स्वरूपं ज्ञानमेव कोऽहमित्ययं भ्रमः । सर्वदा सन् सद्रूपी कोऽहमिति भ्रमः । एवं निरस्ताहंकारः सच्चिदानन्दस्वरूपं ब्रह्मैव त्वम् । तदुक्तं श्रुत्या ' स वा अयमात्मा ब्रह्म ' मु. इति । किं च ' सत्यं ज्ञानमनन्तं ब्रह्म' तै० इति त्वयि दृश्यते सत्यमिति वचनमन्यं वक्तुं न शक्नोतीति ज्ञानमिति पदं त्वमेव नान्यं वक्तुमीष्टे त्वमेवावशिष्यसे त्वद्व्यतिरिक्तं सर्वमेवानित्यमशुचि जडं सुखदुःखस्वरूपं च । सत्यज्ञानानन्दरूपेण मम स्वरूपेऽप्रतीयमाने कोऽहमिति प्रश्न एतदेव मम निजस्वरूपमिति सद्गुरुराज्ञापयति इतः परं तवैव वचनं तत्र सत्यं भवति । तव दृश्यमानं सर्वं त्वं न भवसीति तवैवानुभवः । सत्यज्ञानानन्दस्वरूपस्त्वं भवसीति तवैव स्वसंवेद्यत्वम् । यत एतादृशं दृश्यं तव निजं न भवति । सत्यज्ञानानन्दरूपता त्वय्येव तव । निजाश्रयस्त्वमेवेत्यस्यार्थः । तदुक्तं श्रुत्या ' सदैव मुक्तः ' इति । स्वभावतस्त्वं नित्यमुक्त एव । तवान्यन्निजं नास्ति । अतोऽद्वयोऽप्रमेयः स्वतःसिद्धः स्वयंप्रकाश इत्याखिलश्रुतिसंमत इति सद्गुरुप्रसादेन सम्यग्ज्ञानं भवति तथा लब्धेन सम्यग्ज्ञानेन पंचविधाविद्या तत्कार्यं च कालत्रयेऽपि शून्यमेव । तत्त्वमस्यादिवाक्योत्थसम्यग्बोधोदयो यदा तदाविद्यादिसंसारो न भूतो न भविष्यति । एवं गुरुशिष्यसंवादोत्थेन वेदान्तविद्याग्निना देहद्रष्टृभावप्रभृति सर्वद्रष्टृभावपर्यन्तो दृश्यमानः सर्वोऽप्यविद्यामयः शुष्काटवीरूपः प्रपंचो निःशेषो दह्यते । ज्ञानाग्निस्तु दाह्याभावात्स्वनाशकाभावेऽपि स्वयमेव विलीयते । देहप्रभृति सर्वद्रष्टृभावपर्यन्तं सर्वं जानानस्य

जन्तोराचार्यशिष्यसंवादेन चैतन्येन सह तादात्म्ये सति ज्ञातृत्वमपि लीयते । तदुक्तं 'अन्विष्टस्यात्मविज्ञानं प्राक्प्रमातृत्वमात्मनः । अन्विष्टः स्यात्प्रमातैव पापदोषादिवर्जितः ॥ काष्ठान्निर्दग्धवानग्निरंगारानवशेषयेत् । तृणादीन्दग्धवानग्निर्भस्म चैवावशेषयेत् ॥' कर्पूरं दग्धवानग्निः किमपि नावशेषयेद्यथा । एवमेव श्रुतिगुरुप्रसादोत्थब्रह्मविद्याग्निः प्रमातृप्रमेयप्रमाणसंस्कारांस्तदाश्रयभूतमूलाविद्यासंस्कारं च दग्ध्वा स्वनाशकाभावेऽपि दाह्याभावात्स्वयमेव विलीयते । 'यतो बोधानन्दात्मिका विद्या मन्दाविद्याविभंजनी । तदभावं समालोक्य लज्जयेव विलीयते ॥' एवं निरालम्बासिद्धश्च निजसर्ववर्णाश्रमरहितः सर्वकर्तृत्वरहितः सर्वभोक्तृत्वरहितः सर्वक्रियारहितश्च प्रज्ञातार्थब्रह्मतत्त्वः स्वदेहेऽप्यनहंकृतो लोकसंग्रहाय । यत आहाचार्यः 'लोकसंग्रहहीनस्य कृत्याकृत्यं न विद्यते' । अपि च्चान्तःकरणे स्तोकमपि संभ्रमरहितो बाह्ये कस्मिंश्चिदप्याश्रमे वसन्नपि यावान्कांश्चिदपि धर्माननुतिष्ठन्नपि न तत्केन गुणेन दोषेण वा लिप्यते । यतोऽप्यस्य संसारस्तत्कारणं च कपटभ्रमरूपम् । तदुक्तं 'बहिः कृत्रिमसंरंभो हृदिसंरंभवर्जितः । बहिःकर्ता त्वकर्तान्तर्लोके विहर राघव' क्रियां कुर्वाणः क्रियाभिस्तन्मूलैश्च न बाध्यत इति । कुर्वाणोऽपि न बाध्यते कुतः । 'कुर्वन्नपि न लिप्यते' भ० इति भगवद्वचनम् । 'दग्धाखिलविकारश्चेद्ब्रह्मज्ञानाग्निना मुनिः । वर्तमानः श्रुतेर्मूर्ध्नि नैव स्याद्वेदकिंकरः ॥ विज्ञानहुतभुक्प्लुष्टं मोहतत्कार्यलक्षणं । दृश्यमानमपि स्वेतन्न बन्धायावकल्पते ॥' एवंविधो बोध आचार्यप्रसादेन मया

लब्धो नाभ्यासेनेत्याचार्यकृपाकटाक्षक्षणावाप्तपरब्रह्मतत्त्वावबोधः श्रीमुक्तिनाथो लोकानुग्रहाय ब्रह्मात्मैकत्वज्ञानमुपदिष्टवान्। ॐ इत्युपरम्यते। किंचिद्विश्रम्योच्यते महावाक्यार्थप्रबोधः। कथमित्थम्-व्यष्टिसमष्टिरूपयोस्तत्त्वंपदार्थयोर्विवेको बोधः। स विवेकः कथमिति चेदुच्यते। व्यष्टिसमष्टिरूपौ तत्त्वंपदार्थौ द्विविधौ वाच्यौ लक्ष्यौ च तत्र शबलौ वाच्यौ शुद्धौ लक्ष्यौ। इदमहंरूपविशिष्टार्थस्त्वंपदवाच्यः। अनयोः साक्षित्वेन विलक्षणस्त्वंपदलक्ष्यः। अज्ञानोपाधिकं तत्पदवाच्यमज्ञानसाक्षित्वेन विवेकमुखेन विलक्षणं तत्पदलक्ष्यं व्यष्टिसमष्टिरूपौ तत्त्वंपदार्थौ द्विविधौ वाच्यौ लक्ष्यौ च। तत्र शबलं वाच्यं शुद्धं लक्ष्यं च। स्थूलसूक्ष्मशरीरद्वयविशिष्टं त्वंपदवाच्यमनयोः साक्षिरूपेण विलक्षणं त्वंपदलक्ष्यं मायामायाकार्यविराड्ढिरण्यगर्भोपाधिकं तत्पदवाच्यं मायाविनिर्मुक्तं शुद्धाद्वितीयानन्दचैतन्यं तत्पदलक्ष्यम्। एवं व्यष्टिसमष्टिरूपयोस्तत्त्वंपदार्थयोर्मध्य उभयोर्लक्ष्ययोरेकत्वं सिद्धमेव। अस्यानुभव एवासिपदस्यार्थः। एवमेतन्महावाक्यार्थबोधरूपेण विवेकमलक्षमाणानां भ्रान्तानामपरोक्षज्ञानं न घटते। अतो व्यष्टिसमष्टिरूपस्थूलसूक्ष्मशरीरविशिष्टरूपतापरित्यागाभावेन वाच्यांशपरित्यागो मनोरथमात्रमेव। तस्य शून्यत्वं यदा नापरोक्षं भवति तदा व्यष्टिसमष्टिरूपव्यक्तरूपपरित्यागेऽपि सन्देहो न निवर्तेत इत्यपरोक्षज्ञानं नास्तीति भ्रमोत्पत्तौ निरालम्बसिद्धा महापुरुषास्तद्भ्रमापनोदकयोगसांख्यमुखेनात्मव्यतिरेकेण प्रपंचस्यासद्भाव आत्मन्यपि प्रपंचस्यासद्भावो यथा स्वानु-

भवसिद्धो भवति तथानुगृण्हाति । कथमुच्यते । अस्तीति ना-
स्तीति च व्यवहारवस्तुनिष्ठयोरेकत्रस्थयोर्भिन्नं विरुद्धधर्मयोरवेक्षितं
किंचन योगसांख्ययोः समं परमनुकूलं द्रोहकृत् । अस्तीति
नास्तीति च व्यवहार एकमाश्रित्यैकं विषयीकृत्य च प्रवर्ततेऽन्यथा
नोपपद्यते । अत एव तयोः सदेवाश्रयमिति वक्तव्यम् । अस-
न्नाश्रयो भवितुमर्हति । अतः सन्नाश्रय इति विषयोऽपि सन्नेव
भवितुमर्हति नासत्तर्हि तथैवास्त्विति चेत् । न । यः कश्चिद्वि-
शेषो लोके स विनाशधर्मैवातो विषयत्वमंगीकुर्वाणेन विनाशित्व-
मप्यंगीकरणीयम् । अंगीक्रियतामिति चेन्न सतो विनाशाभावात् ।
तदुक्तं भगवता 'नासतो विद्यते भावो नाभावो विद्यते सतः' भ०
इति । तस्मात्सतो विषयत्वं नास्ति । तर्ह्यसत एव विषयत्वमस्तीति
चेन्न, असतो विषयत्वाभावात् । शशविषाणस्येव । एवमुभयथा
संकटे अत्रैव गतिः । कथम्, उच्यते । तदेवास्तीत्यस्य व्यवहा-
रस्य विषयः । यच्चास्ति यदस्तीत्यस्य व्यवहारस्यार्थो विषयो न
भवति । असतः सद्भावो यस्मिन्प्रतीयमानो भवति तस्यैव सत्तया
परमार्थः सन्नभूत्वापि गगनकुसुमवदत्यन्तमसत् । अभूत्वापि
सदसद्विषयनामरूपादिमान् भूत्वा सत्यज्ञानानन्दादिवद्भूत्वा प्रती-
यमानो विचारितसिद्धोऽनिर्वचनीयमायारूपेण सद्भूत्वा विषयोऽस-
द्भूत्वा विषय इति व्यवन्हियमाणो भवति । अतः सर्वोऽपि ब्रह्म-
विवर्तः स्वप्नवद्व्यवहारमात्रसिद्धो न परमार्थसिद्धः । अस्मिन्नर्थे
गौडपादाचार्यवचनं प्रमाणं 'आदावन्ते च यन्नास्ति वर्तमानेऽपि
तत्तथा । वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः' ।

इदानीमपि यथा स्वप्नद्रष्टा स्वप्नगतभयेनैव प्रबुद्धः स्वप्नव्यवहारे सर्वस्मिञ्श्रुतिगुरुप्रसादेन जायमानब्रह्मापरोक्षवृत्तिसाधनेन प्रबुद्धो वस्तुतोऽसन्सन्निव प्रतीयमानः सर्वोऽपि स्वव्यतिरेकेण नास्ति स्वस्मिन्नपि नास्ति स्वयंवेद्यस्वरूपेण प्रजानानेऽन्यस्यासत्तां जानानस्तस्य च ज्ञानस्य हेतुनाशेऽप्रमेयस्वरूपः स्वयमेवावशिष्यते। अपारसंसारसमुद्रमग्नजीवालिसन्तारणकारणाय। यः प्रादुरासीत्पुरुषोऽविनाशी तं रामचन्द्रं मुनिमानतोऽस्मि ॥ १॥ रामचन्द्रपदाम्भोजमकरन्दालिवृत्तिना। मुकुन्दमुनिना द्वैतज्ञानसर्वस्वमुच्यते ॥ २ ॥ तद्यथा सद्गुरोः स शिष्यः स्वगतमर्थमेवं विज्ञापयति। शरीरमहं न भवामि। अज्ञानमहं न भवामि। ज्ञानमहं न भवामि। ज्ञानस्वरूपं शरीरं च त्वं किमिति न भवसीति चेच्छरीरोत्पत्तेः प्रागेवैतच्छरीरं मम नास्तीत्येतच्छरीरमहं न भवामि। एतच्छरीरनाशादूर्ध्वमेतच्छरीरं मम नास्तीत्येतच्छरीरमहं न भवामि। आद्यावन्ते च यत एतच्छरीरमहं न भवाम्यतो वर्तमानेऽपीदं शरीरं न भवामि। इदं शरीरं तव मा भूच्छरीरमात्रं किं न भवसीतिचेन्मम शरीरमिति शरीरं मत्तः सकाशाद्भिन्नं जानानोऽहं शरीरं न भवामि। किं च दृश्यं शरीरं द्रष्टाहं न भवामि तर्हि ज्ञानं भवान्भवत्विति चेत्तन्न। एतज्ज्ञानोत्पत्तेः पूर्वमेवैतदज्ञानं मम नास्तीत्येतज्ज्ञानमप्यहं न भवामि। एतज्ज्ञाननाशादूर्ध्वमप्येतज्ज्ञानं मम नास्तीत्येतज्ज्ञानमहं न भवामि। आदावन्ते च यतो ज्ञानमहं न भवाम्यतो वर्तमानकालेऽपि ज्ञानमहं न भवामि। अपि च मम ज्ञानमिति ज्ञानं मत्तः सकाशाद्भिन्नं यतो जानाम्यतो ज्ञाताहं

ज्ञेयं ज्ञानं न भवामि तर्ह्यज्ञानं किमिति न भवसीति चेन्न शरीरज्ञानव्यतिरिक्तस्त्वं को वेति प्रश्नेऽहं न जानामीति वक्तव्यम् । न जानामीति यदेतदज्ञानं तन्न जानामीत्यतः पूर्वं नास्तीत्यज्ञानमहं न भवामि । न जानामीत्यूर्ध्वमपि तन्नास्तीत्यतोऽप्यज्ञानमहं न भवामि । आदावन्ते चैतदज्ञानमहं न भवामीति यतः सिद्धमतो वर्तमानेऽप्यज्ञानमहं न भवामि किंच न जानामीत्युक्ते कथं न जानासीति प्रश्नेऽज्ञानं मामावृणोतीत्युत्तरे दत्ते त्वां यदावृणोति तदज्ञानं कस्येति पुनः प्रश्ने ममैवाज्ञानमिति । किंच, अज्ञानान्मम भेदेऽवगतेऽज्ञानं जानानेन तेनैवैतद्दृश्यमज्ञानं न भवामि । अज्ञानमहं न भवामीति वदसि त्वां विहाय किमज्ञानमस्तीति पृष्टेऽज्ञानस्य मम ज्ञानमेव नास्ति । कथं नास्तीति प्रश्ने न जानामीति यतो जानास्यतो ज्ञानं नास्ति । अज्ञानं नास्तीति वदसि तर्हि ज्ञानं किमस्तीति पुनः प्रश्नेऽज्ञानं नास्तीत्यत एव ज्ञानमपि नास्ति । अज्ञानमपि नास्तीति कथमेतदिति प्रश्ने दृष्टान्तपुरःसरं परिहरति यथा सूर्यस्य तिमिरं नास्ति तथा ज्ञानस्य ज्ञानं नास्त्यतोऽसतो ज्ञानस्य ज्ञातृज्ञानं नास्ति । एवमज्ञानज्ञानरहितं ज्ञानस्वरूपमित्यनभिधीयमानं ज्ञातृत्वमेव तुरीयम् । एतदेव ज्ञातृत्वरहितं ज्ञानमात्रमवशिष्य वर्तमानं तुरीयातीतं तदेव मम स्वरूपं काष्ठस्य ज्वलनं स्वभावो न भवति नाप्यंगारस्य किन्तु यदा यदा तु काष्ठमागत्यांगारः स्पृशति तदा तदा मध्ये ज्वलनमुत्पद्यते । सोत्पन्ना ज्वाला किं काष्ठं निःशेषं नाशयत्यथवांगारमिति चर्चायां काष्ठं नाशयति स्वयमेव विनाशं

प्राप्नुवन्ती काष्ठस्पृष्टांगारमात्रमवशेषयति । तथाऽज्ञानस्यापि ज्ञानं स्वभावो न भवति ज्ञानस्यापि ज्ञानं स्वभावो न भवति किन्तु यदा यदाऽज्ञानमागत्य ज्ञानं स्पृशति तदा मध्ये ज्ञानमुत्पद्यत उत्पद्यमानं च ज्ञानं किमज्ञानं निःशेषं नाशयति ज्ञानं वा निःशेषं नाशयतीति चर्चायामज्ञानं निशेषं नाशयत्सत्स्वयमपि नाशमाप्नुवज्ज्ञानमात्रमवशेषयति ॥ इति श्रीसकलयोगीश्वराचार्य-श्रीहरिनाथचरणारविन्दानवरतशुश्रूषाप्रसादलब्धज्ञानतरणिकिरण-श्रेणीनिरस्तसमस्तविद्यान्धकारश्रीरामनाममुनीन्द्रचरणारविन्दमक-रन्दास्वादमधुव्रतेन निरस्ताखिलसंसारविकारेण श्रीमुक्तिनाथमुकु-न्दमुनिना विरचितो निखिलाज्ञानवनदहनपटुः परमार्थतत्त्वप्रबो-धः संपूर्णः ॥ श्रीः[1] ॥

---

श्रीकृष्णाय नमः ॥ प्रख्यातः परमार्थबोध इति यस्त्वं बालबोधप्रदं ग्रन्थं धीरमनोहरं परिमितैर्वाचां विलासैः परैः ॥ कृत्वा ब्रह्मविदाममन्दमहिमा श्रीमुक्तिनाथो मुनिर्मन्दं मन्दविबो-धनाय सदयो ब्रह्मावबोधं परम् ॥ १ ॥ अथोत्तरार्द्धम् ॥ ॐ[2] नमः परमात्मने ॥ पिण्डब्रह्माण्डयोरैक्यं लिंगसूत्रात्मनोरपि ॥ स्वापाव्याकृतयोरैक्यं क्षेत्रज्ञपरमात्मनोः ॥ १ ॥ व्यष्टिसमष्टिरूपं स्थूलमेकमेव । व्यष्टिसमष्टिरूपं सूक्ष्ममप्येकमेव । व्यष्टिसमष्टिरूपं कारणमप्येकमेव । व्यष्टिसमष्टिरूपं चैतन्यमप्येकमेव । चैतन्यस्य

---

१ अयं पूर्वार्द्धः समाप्त इत्यवसीयते यत उत्तरग्रन्थे मंगलाचर-णान्ते 'अथोत्तरार्द्धम्' इति प्रारब्धम् । २ अ० अद्वयानंदाय नमः ।

व्यष्टिसमष्टिरूपता कथमिति चेदित्थम् अव्यक्तभावेन ज्ञानोपाधिकं चैतन्यं ज्ञानाश्रयं साक्षिविलक्षणरूपेण समष्टिः। अज्ञानावच्छिन्नाहंकारोपाधिकं सद्व्यष्टिरपि। प्रत्यगपरोक्षचैतन्यमेवाध्यस्तसदुद्भवनिरुपाधिकाहंकाररूपेण चिदाकारं भूत्वा विषयमतिपरिणामभेदेन सोपाधिकाहंकाररूपेण विषयमुभयसंबन्धक्रियाजन्मवृत्तिश्च। एवं त्रिपुटीरूपेण ब्रह्मविवर्तः सन् प्रतीयते सकलप्रपंचो महाभूतमयः। तानि पंच महाभूतानि कानि। आकाशं वायुरग्निरुदकं पृथ्वीति। एतानि च कतिविधानि भवन्तीति चेत्--द्विविधानि भूत्वा तिष्ठन्ति कथमित्थं--स्थूलानि सूक्ष्माणि च। कानि स्थूलानि कानि सूक्ष्माणि च। पंचीकृतपंचमहाभूतानि स्थूलानि। अपंचीकृतपंचमहाभूतानि सूक्ष्माणि। कानि तानि पंचीकृतपंचमहाभूतानीति चेत् उच्यते गुणधर्मकर्मसहितानि सन्तीन्द्रियवेद्यानि स्थूलपंचीकृतपंचमहाभूतानि। तत्र कस्य भूतस्य को गुणः को वा धर्मः किं कर्म केनेन्द्रियेण किं किं प्रतीयत इति चेदुच्यते। आकाशस्य शब्द एवैको गुणः सच्छिद्रता धर्मोऽवकाशप्रदानं कर्म। एवं गुणधर्मकर्मसहितं श्रोत्रेन्द्रियेण श्रूयमाणमाकाशम्। वायोः शब्दस्पर्शौ द्वौ गुणौ चलनं धर्मो व्यूहनादिकं कर्म। एवं गुणधर्मकर्मसहितः श्रोत्रेन्द्रियेण त्वगिन्द्रियेण श्रूयमाणः स्पृश्यमानश्च प्रतीयमानो वायुः। अग्नेः शब्दस्पर्शरूपाणि त्रयो गुणाः। ऊष्णत्वं धर्मः पचनादिकं कर्म। एवं गुणधर्मकर्मसहितः श्रोत्रेन्द्रियेण त्वगिन्द्रियेण चक्षुरिन्द्रियेण श्रूयमाणः स्पृश्यमानो दृश्यमानः प्रतीयतेऽग्निः। उदकस्य शब्दस्पर्शरूपरसाश्चत्वारो गुणा द्रव्यत्वं

धर्मः पिण्डीकरणादिकं कर्म । एवं गुणधर्मकर्मसहितं श्रोत्रेन्द्रियेण त्वगिन्द्रियेण चक्षुरिन्द्रियेण जिव्हेन्द्रियेण श्रूयमाणं स्पृश्यमानं दृश्यमानमास्वाद्यमानं प्रतीयमानमुदकम् । पृथिव्याः शब्दस्पर्शरूपरसगन्धाः पंच गुणाः कठिनत्वं धर्मो धारणादिकं कर्म । एवंगुणधर्मकर्मसहिता श्रोत्रेन्द्रियेण त्वगिन्द्रियेण चक्षुरिन्द्रियेण जिव्हेन्द्रियेण घ्राणेन्द्रियेण श्रूयमाणा स्पृश्यमाना दृश्यमाना स्वाद्यमाना घ्रायमाणा प्रतीयते पृथ्वी । इति गुणधर्मकर्मसहितानीन्द्रियवेद्यानि स्थूलानि पंचीकृतपंचमहाभूतान्येतानि कारणम् । एतेषां कार्यं किमिति चेदुच्यते ब्रह्मादिस्तम्बपर्यन्तानि स्वेदजांडजजरायुजोद्भिज्जसंज्ञकानि पंचविंशतिगुणानि स्थावरजंगमात्मकान्याधिदैविकान्याध्यात्मिकान्याधिभौतिकानि नामरूपक्रियावन्ति षट् कौशिकपिण्डमयानि षड्भावविकारयुक्तानि षड् । धर्मादिषड्वर्गस्य चालयपंचकोशेषु प्रथमकोशपरिणतानि व्यष्टिसमष्टिस्थूलशरीराणि पंचीकृतपंचमहाभूतकार्याण्येव । ते पंचविंशतिर्गुणाः क इति चेदुच्यते । अस्थिमांसत्वङ्नाड्यो रोमाणीत्येतन्नामकाः पंच कठिनांशाः पृथ्वीगुणाः । लालामूत्रशुक्ररुधिरमज्जेत्येतत्संज्ञकाः पंच द्रवांशा उदकगुणाः, क्षुत्तृण्निद्रालस्यसंगमेत्येतत्संज्ञकाः पंचोष्णांशास्तेजोगुणाः । धावनचलनकंपनाकुंचननिरोधनसंज्ञकाः पंच चलनांशा वायुगुणाः । कामक्रोधभयलज्जामोहसंज्ञकाः पंच सुषिरांशा आकाशगुणाः । एते स्थूलशरीरेषु पंचविंशतिर्गुणा उच्यन्ते । षट् कौशिकानि का-

---

१ अ० धारणा°

नीति चेत्त्वङ्मांसशोणितानि त्रीण्यस्थिस्नायुमज्जास्त्रयः । एवं षट् कौशिकानीत्युच्यन्ते । तत्र त्वङ्मांसशोणितनाम्नांत्रयाणां कोशानां शोणितमिश्रं मातृरेतः कारणम् । अस्थिस्नायुमज्जा-संज्ञकानां त्रयाणां पितृरेतः कारणम् । एवं रेतोद्वयमन्नात्सप्त धातवो जायन्ते । अथ तत्पिण्डोत्पत्तिक्रमः कथ्यते । कथमि-त्थम्—अन्नाद्रसो रसाच्छोणितं शोणितान्मांसं मासान्मेदो मेदो-भ्यः स्नायुः स्नायुभ्योऽस्थीनि । अस्थिभ्यो मज्जा मज्जायाः शुक्रं शुक्राद्रेतः । एवं रेतोद्वयं सप्तमो धातुर्भूत्वा मातृपितृसं-योगाज्जायते । कथमित्थम्—पंचमहाभूतमयं चतुर्विधान्नं भूत्वा पितुर्जठरे प्रदीप्तजठराग्निपक्वं जायमानस्य जन्तोरस्थिस्नायुमज्जाना बीजभूतं पितृरेतो मातुर्जठरं प्रविश्य त्वङ्मांसशोणितानां बीजभूतं मातृरेतसा मीलितं गर्भः । एवं षट्कौशिकं स्थूलशरीरं वर्धमानं तेनैव सहितं विनश्यति । तदुक्तम् ‘ आयुः कर्म च वित्तं च विद्या निधनमेव च ॥ पंचैतानि विलिख्यन्ते गर्भस्थस्यैव देहिनः ॥ १॥ एवं रेतोद्वयस्य मीलितस्य निषेककाल एवैतैः पंचप्राणैर्विधीयते गर्भः । प्रथमं रेतोद्वयमेलन एव पितृरेतस आधिक्ये पुमान्भवति स्त्रीरेतस आधिक्ये स्त्री भवति रेतोद्वयसमत्वे नपुंसकस्थूलदेह उत्पद्यते । एतल्लिंगदेहयुक्तं रेतोद्वयं गर्भे जायमानं प्राणिप्राणवा-युनाधिष्ठितं सद्वर्धते । एतत् षाट्कौशिकं रेतोद्वयं गर्भे प्रविशतः प्राणिनः कर्मानुसारेण क्वचित्क्वचिदप्यन्योन्यवायुपीडनेन गर्भे

---

१ अ० इत्येवं तात्पिण्डोत्पत्तिक्रमः कथ्यते । इत्यधिकम् ।. २ अ० एवोत्पद्यते । इत्यधिकम् ।

निर्गत्य यमलमिति द्वयमपि भवति । दशरात्रात्पिण्डो भूत्वा वर्द्धते । वर्धनप्रकार इत्थम्—एकरात्रोषितेन कललं भवति पंचरात्रोषितेन बुद्बुदं भवति सप्तरात्रोषितेन फेनं भवति दशरात्रोषितेन पिंडितमर्धमासेनांडाकृतिर्भवति । एकमासेन शिरो भवति द्विमासेन बाहुप्रदेशो भवति मासत्रयेण जठरप्रदेशो भवति मासचतुष्टयेनांगुलिजठरपादाद्यवयवा भवन्ति मासपंचकेन वाक्पाणिरूपो भवति षण्मासेनास्थिसंघातो भवति माससप्तकेन समस्ता अवयवा भवन्ति मासाष्टकेन चलनसमर्थः सन्पूर्वातीतनानाजन्मानि स्मरति । किमिति—मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः ॥ नानाजन्मसहस्राणि मया दृष्टानि यानि वै ॥ १ ॥ एवं पूर्वातीतनानाजन्मकर्मसुखदुःखानि विचार्यात्यन्तानिर्विण्णः सन्नितः परं जायमानः पुण्यानि कृत्वा यथा पुनर्गर्भप्रवेशो न भवति तथा कर्तुं समर्थानामहं महानुभावानां श्रीपादपद्मं सेवित्वा संसारं तरिष्यामीति बोधेन सह युज्यते । एवं स्थिते नवमे दशमे च मासे वैष्णवसंज्ञकप्रसूतिवायुभिरर्वाक्क्षिरा नोद्यमानो गर्भान्निःसरन्बाह्यवायुसंपर्केणात्यन्तं क्लेशितः सन्गर्भस्थबोधरहितो भूत्वा शिशुस्तिष्ठति षड्भावविकारयुक्तः । ते च षड् भावविकाराः के, अस्ति, जायते, वर्द्धते, विपरिणमते, अपक्षीयते, विनश्यतीति । तत्रास्तीत्यस्य सद्भावोऽर्थः । जायत इत्यस्य जन्मार्थः । वर्द्धत इत्यस्यावयववृद्धिः । विपरिणमत इत्यस्य पूर्वावस्थात्यागेनावस्थान्तरपरिग्रहः । अपक्षीयत इत्यस्यावयवकार्श्यम् । विनश्यतीत्यस्य विनाशः । एते षड्भावविकारा

उत्पद्यन्ते । षड् धर्माः के । उच्यन्ते । अशनापिपासाशोकमोह-जरामरणानि । तत्राशनापिपासे प्राणधर्मौ । शोकमोहौ मनोधर्मौ । जरामरणे शरीरधर्मौ । एते षड् धर्माः । अरिषड्वर्गः कः । उच्यते । कामक्रोधलोभमोहमदमत्सराः । तापत्रयं किम् । आध्यात्मिक-माधिभौतिकमाधिदैविकं च । तत्राध्यात्मं स्वमनसः स्वशरीराज्जा-यमानमाधिव्याधिरूपं दुःखम् । आधिभौतिकं भूतेभ्यो भवं दुःखम् । आधिदैविकं च ग्रहादिदेवताजनितं दुःखमेतत्तापत्रय-मुच्यते । पंच कोशाः के । उच्यन्ते । अन्नमयप्राणमयमनो-मयविज्ञानमयानन्दमयाः । तत्रान्नमयो देह उच्यते, प्राणमय इति प्राणादिवायव उच्यन्ते मनोमय इति मनोविकाराः विज्ञानमय इति बुद्धिः, आनन्दमय इति जीवः । एते पंच कोशा इत्यु-च्यन्ते । एवमनेकविकारयुक्तानि व्यष्टिसंज्ञकान्येकैकस्य पृथग्दृ-श्यमानानि । एतानि स्थूलशरीराणि पंचीकृतमहाभूतकार्याण्येव । पंचीकृतपंचमहाभूतानि कथितानि । एतत्कार्याणि च विराडि-त्युच्यते । एतदात्मनः स्थूलशरीरमितः सकाशादुत्पन्ना जाग्रदवस्था कथमित्थम्-बाह्येन्द्रियैः सह मीलितेन मनसा बाह्यपदार्थावगति-र्जाग्रदवस्थोच्यते । एवं विराडित्युच्यमानं स्थूलशरीरं ततो भवा जाग्रदवस्था चैतद्द्वयमभिमन्यमानं जीवचैतन्यं विश्व इत्युच्यते । एतत्त्रयमकारः । अस्याधिदेवतारूपमीश्वरचैतन्यं ब्रह्मा । अत्रो-त्पत्तिः । अयमेव प्रथमः पादः । सूक्ष्माण्यपंचीकृतपंचमहाभूता-नि कानि । उच्यन्ते । साक्षिचैतन्यवेद्यानि सात्त्विकराजसता-मसगुणयुक्तानि साधकसाधनसाध्यरूपाणि । तत्र साधकः कः

कानि साधनानि क्रिया साध्यमिति चेत् उच्यते ज्ञानशक्तियुक्त-सात्त्विकाहंकारादुत्पन्नं मन इन्द्रियाधिदेवताश्च साधकमुच्यते। इन्द्रियाधिदेवताश्चैता दिशो वायुः सूर्यो वरुणोऽश्विनावग्निरिन्द्रो विष्णुर्मित्रः प्रजापतिश्च। अन्तःकरणचतुष्टयस्य चन्द्रो ब्रह्मा रुद्रः क्षेत्रज्ञः। गुणत्रयस्य ब्रह्मविष्णुमहेश्वराः। एतज्ज्ञानशक्ति-युक्तः सात्त्विकाहंकारसर्गः। क्रियाशक्तियुक्तराजसाहंकारोत्पत्तिः। दशेन्द्रियाणि प्राणादिवायवश्च साधनानि। दशेन्द्रियाणि च कानि। उच्यन्ते ज्ञानेन्द्रियाणि पंच कर्मेन्द्रियाणि पंच। श्रोत्र-त्वक्चक्षुर्जिव्हाघ्राणानि ज्ञानेन्द्रियाणि पंच तत्र शब्दज्ञानकारणं साधनं श्रोत्रं, स्पर्शग्राहकं करणं त्वक् रूपग्राहकं करणं चक्षुः, रसज्ञानसाधनं करणं जिव्हा, गन्धज्ञानसाधनं करणं घ्राणम्। कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थाख्यानि। वचनसाधनं करणं वाक्, प्रदानसाधनं करणं पाणिः, गमनसाधनं करणं पादः, मलविसर्गसाधनं करणं पायुः, आनन्दसाधनं करणं गुह्यम्। करणशब्देन साधनमुच्यते। एक एव प्राणो वृत्तिभेदेन पंचधा प्राणोऽपानो व्यान उदानः समान इति। तत्र प्राण इडापिंग-लामुखेन द्वादशांगुलप्रमाणो बहिः प्रसरन्नन्तर्भुक्तान्नपानादिरसमा-त्मीकरोति। अपानवायुरधोगामी कटेः सकाशान्मलमूत्रविसर्जनं करोति। व्यानो वायुर्नाभिदेशे स्थित्वाकुंचनचलनगमनागमनानि कारयति। उदानवायुरूर्ध्वगामी कंठे स्थित्वा स्वप्नादि कारयति। समानवायुः सर्वशरीरे स्थित्वान्नपानादिरसान् द्वासप्तति-सहस्रनाडीनां समं विभज्य प्रयच्छति। इति वायुगतिः। क्रि-

याशक्तियुक्तराजसाहंकारसर्गः । अथ द्रव्यशक्तियुक्ततामसाहंकारोत्पन्नं पंच तन्मात्राणि सूक्ष्माणि भूतानि च साध्यम् । पंच तन्मात्राणि चैतानि शब्दस्पर्शरूपरसगन्धाश्चेति । एतान्येव पंचमहाभूतानां बीजरूपेण तन्मात्राणि स्थूलरूपेण गुणाश्च ज्ञानेन्द्रियाणां विषयाश्च । भूतसूक्ष्माणि कानि । उच्यन्ते । एकैकगुणयुक्तानि पृथ्व्यप्तेजोवाय्वाकाशानि । एतान्येव द्रव्यशक्तियुक्ततामसाहंकारसर्गः । कतिविधः साधकः कियत्प्रकाराणि साधनानि कतिविधं साध्यमिति चेत्—उच्यते जानानः सञ्ज्ञाता, उत्पादकः सन्कर्ता, भुंजानः सन्भोक्ता । ज्ञानसाधनानि सन्ति ज्ञानेन्द्रियाणि कर्मसाधनानि सन्ति कर्मेन्द्रियाणि भोगसाधनानि सन्ति प्राणादयः । एवं साधनानि त्रिविधानि । साध्यमपि त्रिविधम् । ज्ञानविषयं सज्ज्ञेयमुत्पाद्यमानं सत्कार्यं भुज्यमानं सद्भोज्यं सर्वोऽपि साधकोऽधिदेवतारूपः । सर्वाण्यपि साधनान्यध्यात्मेन्द्रियाणि । एतत्सर्वं साध्यमधिभूतम् । एवं त्रिविधं त्रिवृदहंकारात्मकं सर्वमादिपुरुषस्वरूपम् । व्यसृजत्पौरुषं रूपं भगवान्महदादिभिः ॥ संभूतं षोडशकलमादौ लोकसिसृक्षया ॥ १ ॥ इति शुकयोगीश्वरवाक्यमित्ययमपंचीकृतपंचमहाभूतसर्गः । एतदेव ब्रह्मांडकोटीनामावरकमाधारभूतमेतदेव कारणम् । अस्य कार्यं किम्—उच्यते । आधिदैविकाध्यात्मिकाधिभौतिकं स्थूलशरीरमध्ये सूत्ररूपेण प्रविष्टं सप्तदशकं लिंगसंज्ञकं सर्वसूक्ष्मशरीराणि । एतदेव पंचविंशतितत्त्वात्मकमित्युच्यते । पुर्यष्टकमिति सप्तदशकं लिंगमिति सूत्रमिति च । पंचविंशतितत्त्वानि कानि

क्रान्तीति चेदुच्यते । आकाश आकाशं ज्ञातृत्वमाकाशे वायुः समानवायुराकाशेऽग्निः श्रोत्रेन्द्रियमाकाश उदकं शब्द आकाशे पृथिवी वागिन्द्रियम् । एवमाकाशतत्त्वानि । वायावाकाशं मनो वायौ वायुर्व्यानवायुर्वायावग्निस्त्वगिन्द्रियं वायावुदकं स्पर्शो वायौ पृथिवी पाणीन्द्रियम् । एवं वायुतत्त्वानि । अग्नावाकाशं बुद्धिरग्नौ वायुरुदानवायुरग्नावग्निश्चक्षुरिन्द्रियमग्नावुदकं रूपमग्नौ पृथिवी पादेन्द्रियम् । एवमग्नितत्त्वानि । उदक आकाशं चित्तमुदके वायुरपानवायुरुदकेऽग्निर्जिव्हेन्द्रियमुदक उदकं रस उदके पृथिवी गुह्येन्द्रियम् । एतान्युदकपंचतत्त्वानि । पृथिव्यामाकाशमहंकारः पृथिव्यां वायुः प्राणवायुः पृथिव्यामग्निर्घ्राणेन्द्रियं पृथिव्यामुदकं गन्धः पृथिव्यां पृथिवी पायुः । एतानि पंच पृथिवीतत्त्वानि । एवमेतानि पंचविंशतितत्त्वानि । पुर्युष्टकं किं—उच्यते । अन्तःकरणपंचकमेकं पुरम् । प्राणादिवायुपंचकं द्वितीयम् । ज्ञानेन्द्रियपंचकं तृतीयम् । शब्दादिविषयपंचकं चतुर्थम् । कर्मेन्द्रियपंचकं पंचमम् । अविद्या षष्ठम् । कामः सप्तमम् । कर्माष्टमम् । इत्येवं पुर्यष्टकम् । सप्तदशकं लिंगं किम्--उच्यते । ज्ञानेन्द्रियाणि पंच कर्मेन्द्रियाणि पंच प्राणादिवायवः पंच मनो बुद्धिश्चेति द्वयम् । एतानि सप्तदश मिलित्वा सप्तदशकं लिंगमित्युच्यते । अथवाकाशादिसूक्ष्मभूतानि पंच ज्ञानेन्द्रियाणि पंच कर्मेन्द्रियाणि पंच मनो बुद्धिश्चेति । एतदेव सूत्रमिति कथम्-उच्यते । अनेन सूत्रेण सर्वशरीराणि व्याप्याधिष्ठतीति सूत्रमित्युच्यते । एतदपंचीकृतपंचमहाभूतकार्यम् । अपंचीकृतपंचम-

हाभूतानि प्रागुक्तानि तत्कार्याणि च मिलतानि हिरण्यगर्भ इत्युच्यते । तदात्मन एवं सूक्ष्मं शरीरं तत्र भवावस्था स्वप्नावस्था सा कीदृशी । उच्यते । बाह्येन्द्रियविषयव्यापारं विनैव मनसा बाह्येन्द्रियविषयव्यवहार इव प्रतीतिः स्वप्नवस्था । हिरण्यगर्भसंज्ञकं सूक्ष्मशरीरमत्र भवावस्था स्वप्नावस्था च द्वयमभिमन्यमानं जीवचैतन्यं विष्णुरित्युच्यते । अत्र स्थितिरयं च प्रणवस्य द्वितीयः पादः । एतानि सर्वाणि स्थूलानि विराट्शब्दवाच्यानि हिरण्यगर्भशब्दवाच्यानि सर्वाणि सूक्ष्माणि देहिनं कृत्वैतद्द्वयस्य कारणं भूत्वा सर्वं भ्रमयतीति माया । सा न सती नाप्यसती नापि सदसती न भिन्ना नाप्यभिन्ना नापि भिन्नाभिन्ना न निरवयवा न सावयवा नोभयात्मिका । सतीति किमिति नोच्यत इति चेत् उच्यते । यदि सती न नश्येत् । सतो नाशाभावात् । इयं तु सम्यग्ज्ञानेन नश्यत्यतो न सती । तर्ह्यसतीति चेन्न यद्यसती नोपलभ्येत खपुष्पवत् । व्यवह्रियते चेयमतो नात्यन्तमसती नापि सती बाध्यत्वात् । तर्हि सदसती भवत्विति चेन्न विरुद्धधर्माणामेकत्रासंभवात् । अतः सदसत्यपि न भवति । भिन्ना किमिति न भवतीति चेन्नात्मनः पृथक् कृत्य दर्शयितुमशक्यत्वादतो न भिन्ना । नाप्यभिन्ना । आत्माविनाशी माया तु विनश्यति । अतो नात्मनो भिन्ना । भिन्नाभिन्नापि न । विरुद्धधर्माणामेकत्र वस्तुन्यसंभवात् । अतो न भिन्नाभिन्ना । निरवयवा किमिति न भवतीति चेन्न निरवयवायाः सावयवप्रपंचोत्पत्तेरभावात् । तर्हि सावयवा भवत्विति चेन्न अनुत्पत्तिमत्त्वादनुत्पा-

देनानादेशतः सावयवत्वासंभवात् । तर्ह्युभयरूपा संभवत्विति चेन्न विरुद्धधर्माणामेकत्र समवायाभावात् । इत्यनिर्वचनीयमनाद्यात्मन एतत्कारणमाधिदैविकाध्यात्मिकाधिभौतिकस्थूलसूक्ष्मशरीरकारणभूतम् । गुणभेदसंभवात् । सर्वास्थूलाविद्यास्य कार्यम् । एतत्कार्यं कारणं च मिलितमव्याकृतमुच्यते। एतदात्मनः कारणशरीरमत्र भवावस्था सुषुप्तिरित्युच्यते । सा कीदृशी, उच्यते । उभयात्मकप्रपंचरूपविपरीतं सर्वप्रतीतीनां कारणमव्याकृतसंज्ञकं कारणशरीरं तत्र भवावस्था चाभिमन्यमानं जीवचैतन्यं प्राज्ञ एतत्त्रयं मकारः । अस्याधिदेवतारूपं शबलं चैतन्यमीश्वरः । अत्र लयः । एतत्त्रयं प्रणवस्य तृतीयः पादः । एवं विराड्हिरण्यगर्भाव्याकृतसंज्ञकानि स्थूलसूक्ष्मकारणशरीराणि । तत्र भवा जाग्रत्स्वप्नसुषुप्त्यवस्थाः । तदभिमानिनो विश्वतैजसप्राज्ञाः । एतेषामुत्पत्तिस्थितिलयकारणं ब्रह्मविष्णुरुद्रनामकाः । अकारोकारमकाराश्चेति सर्वोऽपि कार्यकारणप्रपंचो मायामय एव । ततः शुद्धप्रकाशरूपस्यात्मनोऽज्ञानं वस्तुतो नास्ति । एवं प्रणवसुखबोधो मायाया अनिर्वचनीयत्वं च। शिशूनां बोधसिध्यर्थमनायासेन लिख्यते । मुकुन्दमुनिनेदानीं नित्यानित्यविवेचनम् ॥१॥ कथमुच्यते देहस्तावदनित्यस्तदतिरिक्तश्च नित्योऽस्तीति लोकवेदस्मृतिपुराणानि स्वानुभवश्चात्र प्रमाणम् । लोकः कथं प्रमाणमिचेद्विवेकिनो लोकास्तावदेवं वदन्ति कंचन सुभगं सुन्दरं श्रीमन्तमवलोक्य

---

१ अत्र लिखित पुस्तके 'श्रीगणेशाय नमः' इत्यादिना मंगलपूर्वकमारम्भः कृतः ।

काश्चित्कमपि वदति किंवानेन जन्मनि पूर्वस्मिन्सुकृतमुपचितं कियत्काळं भगवान्परमेश्वरः परितोषितो येनायमीदृशः सुखमास्ते किंच प्रत्यहमुपचीयमानेनास्मिन्नपि जन्मनि क्रियमाणेन पुण्येन कर्मणा प्रायेण जन्मान्तरेऽप्येतादृशो भविष्यतीति । एवं भूते भवति भविष्यति च काले स्वकृतसुकृतफलमनुभवतानुगतेनात्मना भवितव्यम् । वेदाः प्रमाणं कथमिति चेत् उच्यते । ‘ ज्योतिष्टोमेन स्वर्गकामो यजेत ’ इति वेदवाक्यं देहान्तरकालान्तरोपभोग्यस्वर्गफलसाधनं ज्योतिष्टोमसंज्ञकं यागं विदधाति । अतो जन्मनीह ज्योतिष्टोमयागकर्ता देहान्तरे कालान्तरे च स्वर्गादिफलमनुभवितात्मा नित्य एवेत्यंगीकरणीयम् । स्मृतयः पुराणानि चैवंविधानि बहूनि दृश्यन्ते । तस्मादात्मा नित्यः स्वानुभवश्चात्र प्रमाणम् । कथमित्थं-इमं देहं जानानः स्वयं देहो न भवति । एतस्य देहस्य कारणभूताकाशादिपंच महाभूतानि जडत्वादात्मानमन्यं न जानन्ति । अतः कारणात्पंचमहाभूतानि तत्कार्याणि ब्रह्माण्डानि तन्मध्यगतानि चतुर्दश भुवनानि ब्रह्मादिस्तम्बपर्यन्तानि स्थावरजंगमात्मकानि स्थूलशरीराणि जानानः स्वयमेव सत्तामनुभवति । अतः स्वानुभव एवात्र प्रमाणम् । नास्तित्वे किमपि प्रमाणं नास्ति । अपिच यथा घटादीनां सत्तायामसत्तायां च जानानः स्वयमेव प्रमाणम् । एवमेव स्वसत्तायां स्वयमेव प्रमाणम् । किं च यदापि स्वस्यासत्तामनुभवति तदापि स्वस्यासत्तां स्वयं विद्यमान एवानुभवतीति वक्तव्यम् । स्वस्यासत्तापरिज्ञानमप्याश्रयं विना न भवति यतोऽतः स्वसत्तामुभवः सिद्धः । एवं

प्रविवेक्तुं जडो न शक्नोतीति चेन्न स्वयं प्रकाश इत्यंगीकरणीयम्। स्वयं प्रकाशतेऽतः स्वतः सिद्ध एव। नित्यता स्वानुभवसिद्धैव। एवमेव लोकवेदशास्त्रस्वानुभवैरात्मा नित्य एवेति सिद्धम्। अनित्यो देहस्त्वं न भवसि। सत्यमहं देहो न भवामीत्येतावता मम किं जातमिति चेत्-अस्य देहस्य षड् भावविकारा जाति-वर्णाश्रमकुलगोत्रनामरूपस्त्रीपुंनपुंसकस्थूल-ह्रस्वदीर्घश्यामत्वादिधर्माश्च। एते सर्वेऽपि तव न भवन्ति। एवं ज्ञानेन त्वयैव लोकायतमतं निराकृतं भवति शिष्यः पुनः शंकते। स्वामिनैवमनुशिष्टस्यापि मम संसारनिवृत्तिर्दुर्लभा कुतः सत्यमिदं शरीरं न भवामीति। तथाप्येकतमं शरीरमधिष्ठाय तिष्ठाम्यतस्तच्छरीराभिमानिनौ रागद्वेषौ स्तः। अतस्तद्वशेन पुण्यमपुण्यं कर्म कुर्वाणस्तत्तत्कर्मानुसारेण चतुरधिकाशीतिलक्षयोनिमुखेषु पतित्वा जायमाने सुखदुःखे चानुभवंस्तापत्रयतापितः परिभ्रमाम्येवातः संसारो मम तापयतीति पृष्टः सद्गुरुरुपादिशति। तव स्थूलशरीरमपि मन्यमानस्येदमहमिति संप्रतीतावुपपत्तौ जातायां तच्छरीरभवक्लेशानुभवस्तथा सन्नपि वृथैव। तवैवात्रोपपत्तिः शरीरमिदमहं न भवामीति सत्यं, एतज्ज्ञानमेवाहं किमिति न भवामीति चेन्न। एतज्ज्ञानमनित्यं त्वं च नित्यः सर्वमपि ज्ञानाधीनमेव। एतस्मिन्नर्थे ज्ञानं त्वय्युत्पद्यते त्वय्येव विनश्यतीति। अस्मिन्नप्यर्थे प्रमाणं किमिति चेत्-उच्यते लोकवेदस्वानुभवाः प्रमाणम्। लोकः प्रमाणं कथमिति चेत्-उच्यते। त्रिबकिलोकवाक्यानुसारेण। नित्यत्वं कथम्-ऐश्वर्ययुक्तस्त्वं निरीक्ष्यास्मान्यदि चित्तेऽनुसंदधासि

तदा जीवामः । त्वं यदि नानुसन्दधासि तदा विनश्यामः । त्वय्यनुसंदधानेऽस्माकं सर्वमस्ति । मयि त्वमपि नानुसंदधासि तदा किमपि नास्ति । तवानुसंधाने वयं स्थिता इति वदतः स्वशरीरस्य तवानुसंधानस्यानित्यतां वदन्ति तव च नित्यताम् । एतदेव विवृणोति । जायमाने जडशरीरे नोत्पद्यते ज्ञानं, ज्ञानं ज्ञानेऽपि नोत्पद्यते । अतः स्थूलशरीरज्ञानाभ्यामाश्रयभूतस्त्वं भिन्न एवेति ज्ञानाश्रयेऽपि ज्ञातुमिच्छति ज्ञानमुत्पद्यते त्वयि ज्ञातुमनिच्छति ज्ञानं विनश्यति यदा तज्ज्ञानं विनश्यति तदाहमपि विनश्यामीति चेन्न। यदि त्वं नित्यो भवसि तदा त्वदन्येनानुसंधात्रा केनचिद्भवितव्यम् । स च नास्ति यतस्त्वं पुरैवैतन्मय ज्ञातमिति त्वमेवानुसंदधास्यतोऽनुसन्धाता त्वं नित्यमेवानुसंधानं नाम ज्ञानं तच्च ज्ञानं विस्मृत्यानुशिष्टो भूत्वा पुनः स्मरंस्त्वमेधासि । एवं विस्मरतः स्मरतश्च तव सत्ता तवैव च प्रत्यक्षा तवासत्तायां तु किमपि प्रमाणं नास्ति । एवं विविक्तस्य तव सत्ता लौकिकप्रमाणसिद्धा श्रुतयश्चात्र प्रमाणम् । 'आत्मनो मनो जायते' स० इति, 'मनः पूर्वरूपं वागुत्तररूपम्' इति च 'यद्धि मनसा ध्यायति तद्वाचा वदति तत्कर्मणा करोति' इति।'सदेव मनस्त्रिवृत्' इति शुकयोगीन्द्रवाक्यं च सर्वं मनस एव कार्यम् । तस्य च मनसो ज्ञानरूपस्य सत्तायामसत्तायां च साक्षित्वं नित्यमेव । 'सर्वं मनोमयम्' इत्यत्र श्रुत्यन्तरमपि । 'मनसैव पश्यति मनसा शृणोति, कामः संकल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं

मन एव ' बृ. इति । एवं वेदः प्रमाणम् । अनुभवश्चात्र प्रमाणम् । मम तदानीं ज्ञानं जातं न जातमिति च । इदानीं मम मनः स्थिरं वर्तते तदानीं मम मनोऽन्यत्र गतमिति च तस्य सत्तामसत्तां च द्रष्टुस्तव सर्वदा सत्ता तवैवानुभवसिद्धा । तवासत्तायां तु किमपि प्रमाणं नास्ति । अतस्त्वं नित्य एव । एतानि सर्वाणि ज्ञानधर्मा इति स्वामिन आज्ञापितवन्तः । तज्ज्ञानं जानानस्त्वं भवसीति चेत्—तज्ज्ञानं किं जडमजडं वा जडं चेत्सुखदुःखे न जानीयादनुभवितुं न शक्नुयात् । तर्ह्यजडं सज्जानात्वनुभवत्विति चेन्न । तज्ज्ञानमहं वा मत्तो भिन्नं स्वतोऽनुभवति चेन्ममानुभवो दूरे स्यात्तर्हि चैतन्यरूपोऽहमेव ज्ञानं न भवामीति चेन्न तर्हि मम सुखदुःखे कदाचिदपि न हीयेतां विनश्यता ज्ञानेन सह विनश्येयं च । एवं मत्सन्देहः स्वामिभिरपनोदनीय इति शिष्येण विज्ञापितः सन्गुरुराह—तज्ज्ञानं जायमानमुभयात्मकं भवति जडाजडस्वरूपं कथमित्थं—निरुपाधिकाहंकाररूपेण चिद्रूपं त्वत्तः पृथगविद्यमानं तव निजमप्यभूत्वा चिदाकाराकारितं चिद्रूपं विना नास्तीति । रज्जुसर्पवच्चिद्विवर्तो भूत्वा तव दृश्यः सन्नेष च प्रथमोऽध्यास उच्यते । कथमित्थम्—निरुपाधिकस्य रूपस्य जायमानस्याहंकारस्य त्वमेव देह इति तवाहंकारेण सहाध्यासः । अयमहंकारस्तव स्वरूपमभूत्वापि त्वां विना पृथग्वस्त्वभवन्नपि त्वया सहाध्यासो भूत्वा तच्छरीरगतसुखदुःखविषयो भूत्वा स्फटिकलौहित्यवदारोपितान्तर्वृत्तिबाह्यवृत्त्योपरागो भवति । उपरागश्चान्यदीयधर्मस्यान्यत्र संक्र-

मेण । यथा दर्पणः स्फटिकश्च जपाकुसुमस्यातसीपुष्पस्य च संनिधानेन रक्तो नीलश्च प्रतीयते । एवं प्रतीयमानः सोपाधिको भूत्वा विषयप्रीत्येदमिव प्रतीयमानो जडत्वादिप्रतीतिमपेक्ष्य विषयो जायते द्रष्टृदृश्यदर्शनरूपेण त्वयैव प्रतीयते । नवविधव्यवहारभाग्ज्ञातृज्ञेयज्ञानकर्तृकारणकर्मभोक्तृभोगभोग्यतारूपेण व्यवहारस्य नवविधत्वम् । एवंविधव्यवहारभाग्भूत्वा विषयी बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराणां गुणानां गुणिरूपश्च भूत्वा चिद्रूपस्य तव स्थूलदेहस्य मध्येऽन्तःकरणरूपेणोत्पद्यते । तप्तायःपिण्डवत् । एतदेव विवृणोति । यथाग्नेर्वस्तुतोऽपि वर्तुलदीर्घवक्रत्वादयो धर्मा न सन्त्ययःपिंडगता अग्नावारोप्यन्ते । यथा वा स्वतो दाहकत्वं प्रकाशकत्वं चाग्निगतमयःपिण्ड आरोप्यते । एवमविक्रियस्वरूपस्य तव सत्यपि ज्ञातृत्वकर्तृत्वाद्यारोपे जानामीति करोमीति भुंजान इति व्यवहाराः । यथा दर्पणे मुखाभासो दर्पणोऽपि न भवति । दर्पणे जायमानोऽपि न भवति । मुखमपि न भवति मुखव्यतिरेकेण वस्त्वन्तरमपि न भवति दर्पणेन विना स्वयमप्यनुभवन्मुखमात्रमेवावशिष्यते । एवं दर्पणस्थानीय इदंबुद्धिविषयोऽभूत्वा प्रतीयते । विषय्यहंबुद्धिरेषापीदंरूपो जडो न भवति । जड उत्पद्यमानापि न भवति तव स्वरूपमपि न भवति त्वां विना पृथग्वस्त्वपि न भवति त्वमेव प्रतीयते विचार्यमाणे दर्पणस्थानीयेदंबुद्धिरप्यानिदंरूपस्त्वमेवेत्याभासो लीयते चैतन्यमात्रं त्वमेवावशिष्यसे । अतो बुद्धिरानित्यरूपेण त्वयैव प्रतीयते । एवमनित्यस्य ज्ञानस्य पूर्वोक्त

सर्वं सुखदुःखादिधर्मित्वं क्रियाभेदेन । यथाबाशीर्वादक्रियया पुरोहितो लेखनाक्रियया लेखको गणनया गणकोऽश्वारोहणक्रिययाश्ववाहक आयुधं गृहीत्वा पद्भ्यां धावनेन पदातिरित्युच्यते। एवमेक एवान्तःकरणविषये संशयात्मकं मनो निश्चयात्मिका बुद्धिरभिमानरूपोऽहंकारोऽनुसन्धानात्मकं चित्तम् । एवं चतुर्वृत्तिमदन्तःकरणं ज्ञानशक्तिक्रियाशक्तिद्रव्यशक्तिरूपं कृत्वा ज्ञानेन्द्रियकर्मेन्द्रियप्राणादिवायुसाधनसंपन्नं स्वरूपबोधेन व्याप्तं रविप्रकाशेन नेत्रवद्भ्रामकसांनिधानेन लोहवद्रज्ज्वाश्रयसर्पवत्साात्त्विकराजसतामसगुणभेदेन साधकसाधनसाध्यरूपं सर्वेषां लिंगशरीराणां सूत्रमित्युच्यते । एतदेव सूक्ष्मशरीरम् । एवं ज्ञानवतस्त्वत्तो भिन्नम्। इन्द्रियाणि बुद्धिवृत्तयः प्राणाश्चैतान्येवात्मेति वेदबाह्यबौद्धादिमतं त्वयैव निराकृतं भवति। यथा निरुपाधिकोऽग्निर्दग्धुं न शक्नोति । काष्ठादिकमयःपिण्डं वा यदा दहति तदैव काष्ठादिकसाधनदाहकत्वं तथैव निरुपाधिकं केनापि प्रकारेण प्रतीयमानस्य तवाहमिति प्रतीतिं साधनीकृत्य सकलदृश्यप्रतीतिमपेक्ष्याधिकारस्यापि तव द्रष्टृत्वमिव जायते। तज्ज्ञानमिव भवत् प्रतीयते न तदज्ञानमिव भेदेन प्रतीयमानेषु त्वदीयेषु सुखदुःखादिधर्मेष्वनुभवमार्गेषु मदीयास्ते धर्मा इति तान्भ्रान्तः संस्त्वय्यारोपयाति । वस्तुतोऽतद्रूपस्य निरुपाधिकस्य तव द्रष्टृत्वादयो धर्मा न सन्त्येव । अतस्त्वमविकारी च । अतस्त्वां विनाविद्यमानं त्वय्यप्याविद्यमानं तवापरं रूपं सदिव प्रतीयमानं द्रष्टृदृष्टिदृश्यं सकलमप्यागमापायसहितमागमापायरहिते त्वय्येव प्रतीयत इति । त्रिपुटीरूपमप्यनित्यमिति

तवैवानुभवः । तथाहि शरीरगतचक्षुःशूलोदरवेदनादयः क्लेशाः सुषुप्त्यवस्थापन्नस्य ज्ञानरहितस्य तव न प्रतीयंते । अतस्ते तव धर्मा न भवन्ति । कथमिव यथायःपिण्डमयोऽग्निरन्येन ताड्यमानः सदंशेन गृहीतो दृष्टोऽयःपिण्डे यथा क्रियते तथा भवति नतु तस्मिन्नयःपिण्डे मुक्तेऽप्येवमेवाज्ञानाद्भिन्नस्य तत्त्वत उपाधिरहितस्य तज्ज्ञानभवः सकलसंसारक्लेशस्तव नास्ति । अतस्त्वमविक्रिय एव । यथाह विश्वरूपाचार्यः ' अविक्रियस्य भोक्तृत्वं स्यादहंबुद्धिविभ्रमात् । नौयानविभ्रमाद्यद्वत्सुमेरुगतिकल्पनम् ' इति । एवमहं विलक्षणत्वेन त्वां जानानेन त्वयैव प्रभाकरभाट्टनैयायिकादिमतमपि निराकृतं भवाति । एवं गुरुणोक्ते शिष्यः पुनः पृच्छति मम ज्ञानविरहः कथं सिध्यति । ज्ञानविरहे सति मम तद्धर्माणामभावः । सुषुप्त्यवस्थायामपि ज्ञानं निःशेषं ( न ) निवर्तते संस्काररूपेणावशिष्यते यत्तच्च ज्ञानं कस्मादुत्पद्यत इति पृष्टः सन्गुरुरुपदिशति । तवाज्ञानमूलक्रमेणैव तज्ज्ञानमुत्पद्यते । तदज्ञानमेवाविद्या सा द्विविधा १ आच्छादिका २ विक्षेपिका चेति । आच्छादिकोच्यते तत्र स्वरूपं यथा न ज्ञायते तथा वस्तुतोऽनावृण्वत्येवावरिकाच्छादिका । विक्षेपिका त्वत्सरूपानभिज्ञत्वं कृतवती त्वय्येव स्थितापि त्वामन्यथावभासयतीति विक्षेपिका । तत्सरूपानभिज्ञता मम कथमिति चेन्न । अयं जडो दृश्यमानः सर्वोऽपि स्थूलप्रपंचस्त्वं न भवासि जडाजडरूपं च तव वेद्यं महाभूतमहदादिसूक्ष्मभूतं सर्वं प्रपंचजातमपि त्वं न भवासि । एवमुभयरूपप्रपंचोऽप्यहं न भवा-

मीति जानानेन त्वया कस्त्वमिति पृष्टे न जानामीत्युत्तरं दातव्यम् । एतदेवाज्ञानं भावरूपाविद्याच्छादिकेत्युच्यते । आच्छादिका नाम शून्येनावृण्वत्येवावरिकेत्युक्तं शंकते । अनावृण्वत्या एवावरकत्वं कथं भावरूपता च कथं मूलाविद्यात्वं कथमिति चेत्–उच्यते । अहमनेन जानामीति ज्ञानाश्रये त्वयि तदज्ञानं तिष्ठतीति तस्याश्रयस्त्वमेव यदा तदज्ञानं न जानासि तस्यामवस्थायां त्वयि तज्ज्ञानमेव त्वद्व्यतिरेकेणान्या कल्पना नास्ति कथमित्थं ज्ञानरूपस्त्वमेव त्वय्यज्ञानं यतो न जानास्यतो ज्ञानानाश्रयं यत्तु प्रतीयमानमज्ञानं स्वरूपे त्वयीत्थमनाद्याज्ञनमेव सकलप्रपंचमूलकारणमिति मूलाज्ञानमुच्यते । न जानामीति जानानं त्वामावृत्य जडीकरोतीति । वस्तुतोऽनावरिका । अज्ञानं जानाने त्वय्येव न जानामीति तदज्ञानं प्रकटीकरोतीत्यावरिकाप्युच्यते । एवमनावृण्वत्येव सत्यावृणोतीति विष्णुमायेति चोच्यते। एषाप्यविचारितसिद्धा । विचार्यमाणा तु सा नास्ति । कथं-- उच्यते । तत्त्वस्वरूपं न त्वत्तो ज्ञात्वा विचार्यं त्वं ज्ञानमेवेति । त्वद्विषयमाज्ञनं न भवति सूर्यस्यान्धकार इव ज्ञानस्वरूपः स्वत एवाज्ञानं नास्ति । आत्मविषयमाज्ञनं मा भूदितरविषयं भवत्विति चेन्न । एतदाज्ञनमात्मन्यारोप्यते न सहैकतामापन्ने शबले त्वयीतरे तत्प्रतीयते । अज्ञानं मम नास्तीति जानानस्य तवाज्ञानसहभाव एव तत्त्वतो विचार्यमाणो न संभवाति तन्मूलमितरादपि नास्तीतीतरविषयमप्यज्ञानं न संभवत्येव । एवं मूलाज्ञानमाद्यन्तयोरसंभवस्तन्मध्ये प्रतीयमानमपि शून्यमेव । एवम-

विचार्यमाणानादिस्तिष्ठति । एवं गुरुणोक्तः शिष्यः पृच्छति । एवमविचारितसिद्धमूलाज्ञानज्ञानसहिता मयि स्थित्वा मामन्य-रूपेणावभासयतीति विक्षेपिकाविद्येति स्वामिभिरुक्तम् । मूला-ज्ञानरहिते मयि सा कथमवतिष्ठते कथं मामन्यथारूपेणावभास-यतीति पृष्टे सद्गुरुराह—त्वया दृश्यमानः सर्वोऽपि प्रपंचस्त्वमेव त्वद्व्यतिरेकेण वस्तुतो नास्ति कुत इतरस्य त्वद्व्यतिरेकेण सत्ता-प्रतीतिर्नास्ति । एवंविधस्य तवाज्ञानमेव मूलाज्ञानं मूलाज्ञानमेव मूलाज्ञानसहभावः । अयमेव संस्कारो भ्रांतिरूपेणावभासयति नामरूपक्रियात्मकस्य सकलस्यापि प्रपंचस्य सत्ताप्रतीतिक्रिया-रूपेण त्वमेव देही भवसि । एवंविधं त्वां न जानामीति । अज्ञा-नतः करोत्यतो भावरूपाज्ञानमपरोक्षमेव सत्परोक्षमिव भवति । शेषाज्ञानमेव विषयाज्ञानं स्वीकृत्य घटं न जानामि पटं न जाना-मीत्यज्ञानं त्वय्यारोपयति । प्रमाणमपेक्ष्य द्रष्टासि प्रमेयसंस्कारा-विद्या नाशाभावात् त्वां त्रिपुटीरूपेणान्यथावभासयतीयमेव विक्षे-पिकाविद्या मूलाविद्या चोच्यते । सेयं जन्मजन्मान्तरेषु निषिद्ध-काम्यकर्मवर्जनेन ब्रम्हार्पणबुध्या नित्यनैमित्तिककर्मानुष्ठानेन च सर्वैतत्कारणब्रम्हरूपेण सात्विकोत्तमभक्तानां निःकामानामन्तः-करणशुद्धौ जातायामखिलोऽपि संसारो मनःक्रियोद्भवश्चाप्य-नित्याशुचिसुखदुःखात्मक इति निर्विद्य विरक्तानां महानु-भवानां श्रीपादपद्मशरणमाश्रित्य तत्कृपया च निश्चित्य ' आत्मै-वेदं सर्वं, पुरुष एवेदं सर्वं, सर्वं खल्विदं ब्रम्ह, तज्ज-लानिति शान्त उपासीत, अथ खलु क्रतुमयः पुरुषो भवति,

यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति , स क्रतुं कुर्वीत प्राणमयं मनोमयं शरीरज्ञानस्वरूपमत्यन्तनिर्मलं ज्ञानस्वरूपमेवाहुः । तस्मान्न विज्ञानमृतेऽस्ति तद्भाति' इत्यादिश्रुतिस्मृतिवाक्यार्थपर्यालोचनेन भ्रांतिरूपेण प्रतीयमानं नामरूपक्रियात्मिकाखिलदृश्यसत्ताप्रतीतिक्रियारूपेण त्वमेव देह इति तवैव यथानुभवो भवति तथा बोधितस्य तत्त्वस्य ' सर्वमात्मैवाभूत् ' इति श्रुत्या सर्वस्य संवेद्यरूपेण निर्विषयचैतन्यरूपस्त्वमेवेत्यज्ञानमन्यथारूपेणावभासयति सर्वापि मूलाविद्या निरन्वयं विनश्यति । एवं च तव ज्ञानं स्याज्ज्ञानस्य च विषयो नास्ति मामहं जानामि जानामीति च व्यवहारो नास्तीति त्वं नित्यमुक्त इति योगसांख्यमुखेन स्वानुभवसिद्धं भवति । बुद्ध एवातो मुक्त एवमुच्यते । इति श्रुतिप्रामाण्यात् । एवमविशिष्टेन त्वया सांख्यादिभेदमतानि निराकृतानि भवन्ति । अहं यतो ज्ञप्तिरूपोऽतो ममाज्ञानं नास्त्यतस्तस्याज्ञानस्य निवर्तकं ज्ञानमपि नास्ति तस्माज्ज्ञानाज्ञानोद्भवो मोक्षबन्धावपि न स्तो ममातो नित्यमुक्त एवाहं यदि बन्धमोक्षौ न स्तस्तर्ह्यज्ञानं कस्य तदज्ञानोद्भवाखिलसंसारक्लेशानुभवश्च कस्य पुण्यापुण्येनोभयेन च सुखदुःखमुभयं चानुभवंश्चतुरधिकाशीतिलक्षयोनिमुखेषु जायमानो म्रियमाणश्चाविच्छिन्नं संसारे भ्रमन्केनापि सुकृतकर्मणा ब्राह्मणो जायमानः श्रुतिस्मृतिविहितवर्णाश्रमधर्माननतिक्रम्यानुतिष्ठन्कर्मसाध्यं सर्वमपि फलमनित्यं जानन्प्रवृत्तिमार्गं विहाय निवृत्तिमार्गमेव कर्मयोगेनेश्वरार्पणभावेनावलम्ब्य साधकोत्तमो भक्त्या शुद्धान्तःकरणो भूत्वा

नित्यानित्यवस्तुविवेक इहामुत्र फलभोगविराग: शमादिषट्कं मुमुक्षुत्वं चेति साधनचतुष्टयसंपन्न उत्तमाधिकारी भवन्गुरुश्रीपादपद्ममाश्रित्य तेन गुरुणा तत्त्वमस्यादिमहावाक्यार्थज्ञानं प्रापितः सन्निवृत्ताखिलाज्ञानः संसारान्मुच्यत इति । अस्यार्थस्य प्रतिपादकमखिलमपि वेदान्तवाक्यज्ञानं व्यर्थं भवेत् । अस्य वेदान्तज्ञानस्य का गतिर्मोक्षो न पुरुषार्थं इति च । कथं च प्रत्यक्षसंसारमनुभवतो मम संसारो नास्तीत्येतत्तत्त्वतो नास्ति । मायारोपितमिति वदसि तस्याप्यारोपयिताहं वान्यो वा मयापि नारोपितं न च निरस्तम् । इतरेणारोपितमिति चेत्--अद्वितीयस्वरूपस्य ममान्य एव च नास्ति । असत्कथमारोपयेदितीमं संदेहं ममापनयेति पृष्टः सद्गुरुराह—अनुवृत्तिमुखेन पराऽभूत्वाऽविद्येति देहाहंभावप्रभृति कर्तृत्वाभिमानपर्यन्तो विधिकिंकर इति च तद्विधिकैंकर्यं विहाय भगवत्किंकरभावेन विधिमतिक्रम्य प्रत्यक् प्रवणः सन्नस्मीति भावपर्यन्तया विद्यारूपमत्या मुक्तिसिद्धौ जात इति च ते भावव्यवहाराः सर्वेऽपि परिकल्पिताः । एवं विचारितसिद्धाश्चानादयो लोकसिद्धाः श्रुतिगुरुवाक्यानुभवैर्विवेकिनः । अतो विचार्यमाणा मध्ये प्रतीयमाना आद्यन्तयोरसन्तो न सन्त्येव । तैस्तव रूपस्य कोऽपि विकारो नास्तीति तथैवानुभवसिद्धम् । एवमेव तत्त्वादिविकारः सर्वोऽपि स्वप्नवत्परमार्थो न भवति यदि परमार्थो भवेत्तर्हि श्रुतिगुरुवाक्याभ्यां प्रबुद्धस्यायं न बाध्यते तदा सकलश्रुतिस्मृतिपुराणानुभवानां भ्रांतिव्यावृत्तिमुखेन पुरुषार्थसाधकत्वं न घटेत । अतोऽयमविकारस्स्वव्यतिरेके-

णाविद्यमानः प्रतीयमानो विचार्यमाणो वस्तुतोऽसंस्त्रिकाल-शून्य एव । अतः संप्रतीयमानो मायामय एवेत्यवगच्छ । कथम्-इत्थम्—ज्ञेयरूपेणाप्रतीयमाने ज्ञप्तिमात्ररूपे त्वयि दृश्यमानं सर्वं यतो विलीयते । अत आगमापायवियुक्तं सर्वमागमापायरहित-स्त्वमेवावशिष्यसेऽन्यत्सर्वं नास्त्येव । अविद्यापि तव यथा निद्रा-दिदोषवशेन सर्वोऽपि स्वप्नव्यवहारः प्रत्यक्ष एव परिदृश्यमानः प्रबुद्धं त्वां विहाय मिथ्याभूत एव तथैव तव मायासंज्ञिका निद्रा दोषवशेन त्वमेव नानारूपेण प्रतीयमानः संसारमहास्वप्नव्यवहार-मनुभवन्निव वर्तमानो महानुभवकृपया यदा प्रबुध्यसे तदाद्येऽवसानेऽप्यसत्ता केवलं मध्य एव प्रतीयमानेन शून्यरूपेण प्रपंचव्यवहारेण तव स्वरूपस्य कोऽपि विकारो नास्त्यतस्त्वं सर्वदाऽविक्रियरूप एव । अतस्तव प्रतीयमानं सर्वमपि प्रपंच-जातमिन्द्रजालमिव गन्धर्वनगरमिव वन्ध्यापुत्र इव गगनकुसु-ममिव शशविषाणमिव मरीचिकाजलमिव शून्यमन्यत्तव सत्तयैव प्रतीयते त्वद्व्यतिरेकेण नास्तीति तवैव यथानुभवो भवतीति । तथा महापुरुषा एतान्दृष्टान्तान्प्रदर्श्य बोधितवन्तः । अस्मिन्नेवार्थे श्रुतिं स्मृतिं च प्रदर्शयन्ति । तद्यथा ' यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, यत्रान्यदेवं स्यात्, द्वावेव ब्रह्मणो रूपे मूर्तं चामूर्तं च ' इति, ' द्वाविमौ पुरुषौ लोके ' इति । ' आत्मानात्मपदार्थौ द्वाविति च, ' यत्रैतत्सदसद्रूपे ' इति च श्रुतिस्मृतिपुराणवाक्यैर्भ्रांतिकल्पितरूपं त्वयैव प्रदर्श्यते निरासं कुर्वन्ति तद्यथा ' यत्र त्वस्य सर्वमात्मैवाभूत् ' इति, ' नेह

नानास्ति किंचन ' इति, ' यदा भूतपृथग्भावम् ' इति च, ' न यदिदमग्र आसीत्' इति च एवमादिभिः श्रुतिस्मृतिपुराणवाक्यैर्भ्रांत्या मतिविकारः प्रतीयमानस्त्वं न भवसीत्यतो निरसनमुखेन परमार्थस्य तत्त्वप्राप्तस्यैव प्रमाणं तत्रापोह्यांशाभावात् । परिहृतस्यैव प्रपंचस्य परिहरणम् । एवं च कृत्वाद्यन्तयोरखण्डैकरसस्त्वमेवावशिष्यसे श्रुतीनां त्वय्येवोपरतिश्च । एतदेवाखिलश्रुतीनां फलं तत्कथमिति रूप इव प्रतीयमानस्त्वमेवेति संसारमहास्वप्नवत्तस्मिन्मिथ्यात्वं च स्वयंवेद्यरूपेण तवैवानुभवः शिष्यते । एतदेव तुरीयमिति रूपता कदाचिदपि तत्र नास्ति । तान्यात्मन्यारोपितवानपि त्वं न भवसि । कथम्, इत्थं—मतिरूपविद्योपाधिकस्त्वमेव स्वसत्तामसत्तां च जानन्मतिरूपामिथ्याभूतेति तद्विस्मृत्य विस्मर्तुमप्यशक्यं निजरूपं त्वमेवावशिष्यसे । एतदेव तुरीयातीतम् । इदानीं महावाक्यार्थमुखेन बोधः कथ्यते । यमनियमादिसाधनसंपन्नानामधिकारिणामनुग्रहाय । अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ, एते पंच यमाः । शौचसंतोषस्वाध्यायस्वरप्रणिधानानि नियमाः । तत्र महावाक्ये तत्पदं त्वंपदं चेति पदद्वयमस्ति । तत्पदस्य त्वंपदस्य च वाच्यमर्थं लक्ष्यमर्थं च कथयामः । तत्र तत्पदस्य वाच्योऽर्थः कथ्यते । मायोपाधिकः सकलजगदुत्पत्तिस्थितिलयकारणरूपः सर्वज्ञः सर्वेश्वरः सर्वशक्तिमान्सर्वकामफलप्रदश्च । पारोक्ष्येण सह वर्तमानः सत्यज्ञानानन्दाद्वितीयचैतन्यं तत्पदस्य वाच्योऽर्थः । त्वंपदस्य वाच्योऽर्थः कथ्यते । देहेन्द्रियमनः-

प्राणाहंकारममकारादियुक्तं प्रत्यक् चैतन्यं त्वंपदस्यार्थः । एवंविधयोस्तत्त्वंपदार्थयोरुभयोरेकत्वज्ञानं नोपपद्यते । कथम्-इत्थम्-आन्तरं वस्तु बाह्यं न भवति बाह्यं वान्तरं न भवति द्वितीयं वस्त्वद्वितीयं न भवत्यद्वितीयमपि द्वितीयं न भवति । अतो विरुद्धयोर्वाच्यार्थयोरेकत्वासंभवाल्लक्ष्यार्थयोरेकत्वमंगीकरणीयम् । लक्ष्यार्थः क इति चेदुच्यते । मायोपाधिको न भवति सकलजगदुत्पत्तिस्थितिलयकारणमपि न भवति सर्वज्ञः सर्वेश्वरः सर्वशक्तिमान्न भवति सर्वकामप्रदोऽपि न भवति पारोक्ष्येण सह वर्तमानोऽपि न भवति किन्तु केवलं सत्यज्ञानानन्दाद्वितीयस्वरूपं चैतन्यं तत्पदलक्ष्यार्थः कथ्यते । श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणसंज्ञकपंचबुद्धीन्द्रियरहितो वाक्पाणिपादपायूपस्थसंज्ञकपंचकर्मेन्द्रियरहितः प्राणापानव्यानोदानसमाननागकूर्मकृकलदेवदत्तधनंजयाख्यदशवायुरहितो मनोबुद्ध्यहंकारचित्तसंज्ञकान्तःकरणचतुष्टयरहितः शब्दस्पर्शरूपरसगन्धवचनादानगमनमलविसर्गानन्दसंशयनिश्चयाभिमानानुसंधानात्मकचतुर्दशविषयरहितः । अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयपंचकोशरहितस्त्वङ्मांसास्थिस्नायुमज्जाशुक्रशोणितनामकसप्तधातुरहितो जाग्रत्स्वप्नसुषुप्त्यवस्थात्रयरहित आध्यात्मिकाधिभौतिकाधिदैविकतापत्रयरहितः सत्त्वरजस्तमोगुणरहितः पुत्रैषणावित्तैषणालोकैषणेतीषणात्रयरहितो भूतभविष्यवर्तमानकालत्रयरहितः कामक्रोधलोभमोहमदमात्सर्यात्मकारिषड्वर्गरहितोऽशनापिपासाशोकमोहजरामरणषडूर्मिरहितोऽस्ति जायते वर्धते विपरिणमतेऽपक्षीयते विनश्यतीति षड्भावविकाररहितः

सर्वप्राणिहृदि स्थितं प्रत्यक्चैतन्यं त्वंपदलक्ष्योऽर्थः । एतत्प्रत्यक् चैतन्यं सत्यज्ञानानन्ताद्वितीयचैतन्यमेव । एवं वेद आह । 'सत्यं ज्ञानमनन्तं ब्रह्म' इति । पृच्छाति–सत्यमित्येकं ब्रह्म, ज्ञानमित्येकं ब्रह्म, अनन्तमित्येकं ब्रह्म, । किमेतावन्ति ब्रह्माणि सन्त्येकमेव वेति पृष्टः सद्गुरुराह-सत्यशब्देनाविनश्वरमुच्यते । ज्ञानशब्देन ज्ञप्तिस्वरूपमुच्यते । अनन्तशब्देनाखण्डमुच्यते । ब्रह्मशब्देन परिपूर्णमुच्यते । एकमेवानन्दाद्वितीयचैतन्यं ब्रह्म त्वमसि । ब्रह्माहमस्म्यहं ब्रह्मास्मीति ज्ञात्वा प्रबुद्धः कृतकृत्यो भवति 'ब्रह्मैव सन्ब्रह्माप्येति विमुक्तश्च विमुच्यते' इत्यादिश्रुतिभ्यः । एवं मायानिद्राप्रबुद्धः सञ्जीवन्मुक्तः प्रारब्धकर्मजनितफलावधि लोकाननुगृण्हन्नवतिष्ठते । यतो 'विमुच्यापि त्वचं सर्पो यथा रूपं न मुंचति ॥ प्रध्वस्ताखिलमोहोऽपि लोकान्कार्यं तथात्मविद्' इति ॥ १ ॥ अथ शिष्याणामाज्ञा गुरुपंक्तिकथनं चैतत् । वेदान्तसारसर्वस्वं पाखण्डी नैव मन्यते । किं जानीयुरिमे पापा हताः स्वीयासदुक्तिभिः ॥ १ ॥ पाखण्डानामभक्तानां नृणामुत्पथगामिनाम् । एतद्विज्ञानसर्वस्वं मतिमान्न प्रकाशयेत् ॥ २ ॥ शुद्धानां गुरुभक्तानां श्रद्धालूनां दयावताम् । सुशीलानां सुशिष्याणां शास्त्रमेतत्प्रकाशयेत् ॥ ३ ॥ आत्मज्ञानैकमूले भवसलिलनिधौ क्लिश्यमान्मनुष्यान्दृष्ट्वा ज्ञानोपदेशात्सकरुणहृदयाक्रान्ततत्तारणेच्छुः । विष्णुर्भूमौ युगेऽस्मिन्हरिरिति गदितः प्राप्तमाध्यन्दिनीयस्वाध्यायप्रोक्तसर्वस्ववितरणजनितख्यातिरग्रेऽवतीर्णः ॥ ४ ॥

---

१ एतदग्रेतनो ग्रंथः 'अ' पुस्तके नास्ति ।

ज्ञानेन सताध्ययनेन तपसा त्वाराधितः शंकरः पूर्णाहुत्यवसानहोमसमये प्रादुर्बभूव क्षणात्। अग्नेरर्चिरिवापरः प्रकटितो ज्ञानैकमूर्तिस्तदा मत्तः किं त्वमभीप्ससीत्यभिदधे तस्याग्रतस्तस्थिवान् ॥ ५ ॥ तत्तस्योपदिदेशसांगमखिलं यत्नेन जिज्ञासितं मोदं मेदुरयन्नुवास च पुरः स्वान्ते च तत्स्थः क्षणम्। पार्वत्या सहितः शिवः शिववपुस्तस्मिन्पुरस्तात्स्थिते पश्यत्येव स विस्मये सकुतुके क्षिप्रं किलान्तर्दधे ॥ ६ ॥ वेदान्तप्रतिपाद्यतत्त्वमहसो ज्ञात्वादिनाथाद्धरिः सच्छिष्यानधिकारिणो बहुतरान्संबोध्य तत्त्वं परम्। तन्मध्ये गुणवत्तरं वितमसं श्रीरामनाथो मुनिं साम्राज्येऽभिषिषेच योगविधिना पादान्वितं योगिनाम् ॥ ७ ॥ ज्ञाने कस्याधिकारो भवति बहुतरस्वेषु शिष्येषु मध्ये ध्यात्वैवं स्वीयचित्ते सकलगुणनिधिं श्रीमुकुन्दं मुनीशम्। निश्चित्यार्थान्वगृह्णन्निखिलमपि तदा ज्ञानसर्वस्वमस्मै सच्छिष्यायोपदिष्टं प्रसरति बहुशः किं च संचीयते च ॥ ८ ॥ तच्छिष्यत्वमवाप्य सम्यगखिलान्मायोक्ततत्त्वार्थविद्भूत्वेमं कृतवानमन्दमहिमा श्रीमान्मुकुन्दो मुनिः। शिष्येष्वन्येषु सर्वेष्वहमधिककृपापात्रमस्यास्मि जातो। ग्रन्थं मद्बोधसिद्ध्यै कुरु बहुसुगमं ज्ञानसर्वस्वसारम्। एवं विज्ञापितः सन्नवनतशिरसा जित्यापलेन धीमान्सद्यः कृत्वा हि तस्मै सकरुद्दणदयः श्रीमुकुन्दो मुनीन्द्रः ॥ ९ ॥ ॐतत्सच्छ्रीमत्सकलवेदान्तार्थ[1]ब्रह्मावबोधज्ञानसागरश्रीमुकुन्दराजमुनिनिर्मितं महाभाष्यं समाप्तम् ॥

---

१ अ. वेदान्तमथितार्थ०।